# विषय-सूची

# उत्सर्गपत्रम्

विविधविरुदावलीविराजमान-मानोन्नत-क्षत्रकुलतिलक-
परमभागवत-छत्रपुराधिपति–महाराज-
राजर्षि-हिज्-हाईनेस-

**श्रीमद्विश्वनाथसिंह के० सी० आई० ई०**

वाहादूरमहोदयाय

**समुत्सृष्टोऽयं ग्रन्थः**

प्राच्यप्रतीच्यबहुशास्त्रविचारचारु-
प्रज्ञासमुज्ज्वल गुणग्रहणैकनिष्ठ ।
बुन्देलखण्डनृपमण्डलमण्डन त्वां
श्रीविश्वनाथमभिनन्दयतान्मुकुन्दः ॥ १ ॥

भूतिस्तोमविभूषितः परशुभोल्लासैः समुद्भासितो
रत्नेनैव चिरं विराजितशिरा दिव्येन शुभ्रांशुना ।
शान्तस्निग्धमणिद्युतिप्रविलसन्मालामहीनां दधत्
कारुण्यैकपरायणो विजयते श्रीविश्वनाथः प्रभुः ॥ २ ॥

समादरभरैस्त्वया निजपुरेऽहमामन्त्रितः
प्रभूतधनदानतः सुवचसा च सम्मानितः ।
प्रदेयमिव किं भवेन्मनुजनाथ तुभ्यं मया
गृहाण सममाशिषा श्रमफलं ममैतन्नृप ॥ ३ ॥

निबन्ध इति सादरं ध्रुवपदाभिधानो मया
नराधिप समर्प्यते करसरोजयोः श्रीमतः ।
अये गुणगणाम्बुधे यदि भवेत् स दोषाकर-
स्तथापि समुपेक्ष्यतां न हि यदाशुतोषो भवान् ॥ ४ ॥

नियतशुभानुध्यायिना गुणमुग्धेन
**श्रीहरिहरशास्त्रिणा**

# भूमिका

## शास्त्रमहात्म्यम्

इह खलु प्रेक्षापूर्वकारिणः सर्वे एव पुरुषार्थसम्पदमभिलषन्तस्तत्साधनोपायमनुसन्धित्सवो दृश्यन्ते। तत्र च दृष्टादृष्टभेदेन द्विधा किल पुरुषार्थाधिगमस्य सरणिः। दृष्टे विषये स्नानाशनादौ प्रवृत्तिस्तु न खलु जात्वपीष्टसाधनताज्ञानार्थं शास्त्रमुखं निरीक्षते। परिश्रान्तः स्नायादश्नीयाद्वा बुभुक्षित इत्यत्र नास्ति कश्चिच्छास्त्रस्योपयोगः, तत्र नैसर्गिकरागत एव लोकप्रवृत्तेः। अदृष्टे तु स्वर्गापवर्गमात्रे शास्त्रमेव लोकस्योपकरोति। शास्त्रं हि तावत् पितेव वत्सलः पुरुषार्थाधिगमस्य सकलसदुपायानस्मान् दर्शयति। तस्माद्योगसमाधिजनितदिव्यचक्षुर्विरहितैरस्माभिः सर्व्वतः शास्त्रमेव समाश्रयणीयमित्यत्र कोऽस्ति संशयावसरः? तच्च शास्त्रं चतुर्दशविधमित्यामनन्ति मनीषिणः। तथा चोक्तं याज्ञवल्क्यसंहितायाम्—

> पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः।
> वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश॥—(१–३)

विष्णुपुराणेऽप्युक्तम्—

> अङ्गानि चतुरो वेदा मीमांसा न्यायविस्तरः।
> पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश॥—(३–६–२८)

परन्तु सर्वास्वेतासु विद्यासु वेदप्रामाण्योपपादकत्वात् न्यायशास्त्रमेव मूलस्तम्भभूतमिति न खलु न ज्ञातं तत्त्वविद्भिः। वेदेषु नास्तिकजनोद्भावितकुतर्कविप्लावितप्रामाण्येष्ववश्यं साधवः शिथिलास्था भवेयुर्निवर्त्तेरंश्च बहुवित्तव्ययायाससाध्याद्वेदार्थानुष्ठानादित्यत्र नास्ति कश्चित् सन्देहः। स्वोपजीव्ये वेद एव परिम्लाने किं काम करणीयं तदानीं तदनुयायिभिर्मीमांसादिशास्त्रैरिति सुतरामेव तेषामानर्थक्यमापतति। तस्मात्सर्वकुतार्किकगर्वोपमर्दद्वारा वेदानां दृढतरप्रामाण्यानुविधायि न्यायवैशेषिकशास्त्रमेव परं विद्यास्थानम्। अत्राशङ्क्य समाहितं जरन्नैयायिकजयन्तभट्टेन—

"ननु वेदप्रामाण्यनिर्णयप्रयोजनश्चेन्न्यायविस्तरः कृतमनेन, मीमांसात एव तत्सिद्धेः तत्र ह्यर्थविचारवत् प्रामाण्यविचारोऽपि कृत एव। सत्यं, स त्वानुषङ्गिकस्तत्र मुख्यस्त्वर्थविचार एव। पृथक्प्रस्थाना हीमा विद्याः सा च वाक्यार्थविद्या न प्रमाणविद्येति। न च मीमांसकाः सम्यग्वेदप्रामाण्यरक्षणक्षमां सरणिमवलोकयितुं कुशलाः कुतर्ककण्टकनिकरनिरुद्धसञ्चारमार्गाभासपरिभ्रान्ताः खलु त इति वक्ष्यामः।"—(न्यायमञ्जरी, पृ० ४)

इयं च न्यायविद्या "आन्वीक्षिकी"त्यपरनाम्नाऽप्यभिधीयते शास्त्रविद्भिः। अस्मिन् संसारकान्तारे कियन्ति दुःखदुर्दिनानि कियती वा सुखखद्योतिकेति कुपितफणिफणामण्डलच्छायाप्रतिममिदमिति मन्यमानाः सर्व एव सन्तो व्यवस्यन्ति दुःखभारं समूलमुन्मूलयितुम्। न खलु विवेकिनः पातादिभयात् स्वर्गमपि कामयन्ते। तथा चोक्तं भगवद्गीतायाम्—

"ते तं भुक्त्वा स्वर्गलोकं विशालं
क्षीणे पुण्ये मर्त्यलोकं विशन्ति।"

अतः सततं प्रच्युतिशङ्कया कस्यचित् स्वर्गमात्रमपरस्य स्वाराज्यमिति परस्परस्पदुत्कर्षोपतापाच्च स्वर्गादिपदमपि न निश्चितं श्रेयः। अत एवात्यन्तिकदुःखनिवृत्तिरूपं निःश्रेयसमेव सर्वे परमपुरुषार्थतया प्रार्थयन्ते। तत्र को नामोपायो निःश्रेयसस्येति जिज्ञासायां श्रुतिराह—

"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" (बृहदारण्यक० ४-५-६)

अर्थस्तावदस्याः—मुमुक्षुणा आत्मा द्रष्टव्यः, मुमुक्षोरात्मदर्शनमपवर्गरूपेष्टसाधनमिति यावत्। आत्मदर्शनोपायः क इत्यत आह श्रोतव्य इत्यादि।

"अग्निहोत्रं जुहोति यवागूं पचति" इत्यत्राऽग्निहोत्रे द्रव्याकाङ्क्षासत्त्वाद् द्रव्यान्तरानुपदेशाच्च यवागूपाकस्य स्वातन्त्र्योपपत्त्या यवागूद्रव्यस्यैवाग्निहोत्राङ्गतेति प्रथमं यवागूपाकस्ततोऽग्निहोत्रमिति क्रमस्तथाऽऽत्मदर्शनस्य श्रवणाद्यानन्तर्यमार्थक्रमेण शाब्दक्रमस्य त्यक्तत्वात्। तथा च श्रवणमनननिदिध्यासनानि तत्त्वज्ञानप्रयोजकानीत्युक्तं भवति। तत्र च श्रुतितः कृतात्मश्रवणस्य मननेऽधिकारः। मननं चात्मन इतरभिन्नत्वेनानुमानम्, "श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभि"रितिस्मरणात्।

श्रवणानन्तरप्राप्तमननस्य सुष्ठुनिर्वाहकतयाऽऽन्वीक्षिकीत्यन्वर्थनामधेयमेव न्यायविद्यायाः। तथा चोक्तं न्यायभाष्यकृता—"प्रत्यक्षागमाभ्यामीक्षितस्यान्वीक्षणमन्वीक्षा, तया प्रवर्तत इत्यान्वीक्षिकी न्यायविद्या न्यायशास्त्रम्"। (१-१-१)

नामलिङ्गानुशासनकृदमरोऽप्याह—

"आन्वीक्षिकी दण्डनीतिस्तर्कविद्यार्थशास्त्रयोः"।

ननु साङ्ख्यवेदान्तादिशास्त्रेष्वपि मनननिर्वाहकपदार्थनिरूपणसत्त्वात् कथं न्यायविद्याया एवाऽऽन्वीक्षिकीति संज्ञा सङ्गच्छतामित्याशङ्कायामाह न्यायसूत्रविवरणकृद् गोस्वामिभट्टाचार्यः—

"एतद्ग्रन्थस्याऽऽन्वीक्षिकीन्यायतर्कादिशब्दैर्व्यपदेशश्च योगेन रूढ्या च। तत्र श्रवणादनु पश्चादीक्षाऽऽत्ममननमन्वीक्षा, तन्निर्वाहिकाऽऽन्वीक्षिकीति योगार्थः।

अस्यार्थस्य वेदान्तादिगतत्वेऽपि अत्र न्यायस्य बलवत्त्वेन प्राचुर्य्येण च भूरिप्रयोगाद्रूढिकल्पनमिति ।" ( न्यायसूत्रविवरणम् ६ पृ० )

निःश्रेयसोपायप्रतिपादनेनात्मनः परमोपकारकत्वादान्वीक्षिक्या आत्मविद्येति विशेषणमुपात्तं **मनुना**—

"त्रैविद्येभ्यस्त्रयीं विद्याद् दण्डनीतिं च शाश्वतीम् ।
आन्वीक्षिकीञ्चात्मविद्यां वार्तारम्भांश्च लोकतः" ॥ (७-४३)

**महाभारतान्तर्भूतशान्तिपर्वणि** याज्ञवल्क्यजनकसंवादपाठेनावगम्यते याज्ञवल्क्यस्तावद् गौतमोक्ताया एवाऽऽन्वीक्षिक्याः साहाय्येन वेदान्तज्ञानकोविदस्य विश्वावसोर्दुरूहप्रश्नान् समादधौ, आह च "एषा तेऽन्वीक्षिकी विद्या चतुर्थी साम्परायिकी ।" ( शान्ति० मोक्ष० ३१८-४७ ) अत्र **नीलकण्ठः**—

"चतुर्थी त्रयीं वार्ता दण्डनीतिञ्चापेक्ष्य । साम्परायिकी मोक्षाय हिता ।"

आन्वीक्षिक्या मोक्षविधायकत्वात् महर्षिणा नारदेनाऽपि शास्त्रमिदमायत्तीकृतमिति तस्य प्रतिज्ञादिपञ्चावयववाक्यस्य गुणदोषवेत्तृत्वश्रवणादवधार्यते । तथा चोक्तं सभापर्व्वणि **महाभारतीये**—

"पञ्चावयवयुक्तस्य वाक्यस्य गुणदोषवित् ।" ( **महा० सभा० ५-५** )

**छान्दोग्यश्रुतावसौ** महर्षिः स्वस्य तर्कशास्त्राभिज्ञत्वं स्वयमेव स्वीचकार । यथा—

"अधीहि भगव इति होपससाद सनत्कुमारं नारदः । तं होवाच यद् वेत्थ तेन मोपसीद ततस्त ऊर्द्ध्वं वक्ष्यामीति । स होवाच ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यं राशिं दैवं निधिं वाकोवाक्यमेकायन"मित्यादि । अत्र **शाङ्कर**भाष्यम्—

"वाकोवाक्यं तर्कशास्त्रमेकायनं नीतिशास्त्रम् ।"

श्रीकृष्णबलरामावपि धनुर्वेदादिविद्यामिवाऽऽन्वीक्षिकीमधीतवन्तौ । तथा च **भागवते**—

"सरहस्यं धनुर्वेदं धर्मान् न्यायपथांस्तथा ।
तथा चाऽऽन्वीक्षिकीं विद्यां राजनीतिं च षड्विधाम् ।" (१०-४५-३४)

भगवता स्वयमप्युक्तम्-"आन्वीक्षिकी कौशलानाम्"—इति।(भाग० ११।१६।२४

धर्मतत्त्वनिरूपणेऽपि तर्कशास्त्रमवश्यमपेक्षणीयमिति स्पष्टमुक्तं **मनुना**—

"आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ॥" (१२-१०६)

वेदशास्त्राविरोधिनेतिविशेषणश्रवणादत्र तर्कपदं गौतमोक्तन्यायशास्त्रपरमेवेति निर्णीयते । यतः स खलु महर्षिः—

"श्रुतिप्रामाण्याच्चे"ति ( २-१-१९ ) सूत्रे वेदविरुद्धस्यानुमानस्याप्रामा-

प्यमसूचयत्। अत एव भाष्यकृता वात्स्यायनेनाऽप्युक्तम्- "यत्पुनरनुमानं प्रत्यक्षागमविरुद्धं न्यायाभासः स इति (१।१।१)

धर्मोपदेशकपरिषद्यपि नैयायिकस्यावस्थितिरावश्यकीति व्यवस्थापितं मनुस्मृतौ—

त्रैविद्यो हैतुकस्तर्की नैरुक्तो धर्मपाठकः।
त्रयश्चाश्रमिणः पूर्वे परिषत्स्याद्दशावरा।" (१२-१११)

अत्र कुल्लूकभट्टेन "हैतुक" शब्दस्य 'श्रुतिस्मृत्यविरुद्धन्यायशास्त्रज्ञ' इत्येवंरूपोऽर्थः प्रदर्शितः। एतेन वेदविरुद्धायाः स्वबुद्धिमात्रकल्पिताया बौद्धचार्वाकादितर्कविद्यायाः नास्ति क्वचिदुपयोग इत्यवगम्यते। अत एव "त्रैविद्येभ्यस्त्रयीं विद्या" दित्यादिमनुश्लोक (७·४१) भाष्यावसरे मेधातिथिना स्पष्टमुक्तम्—" या तु बौद्धचार्वाकादितर्कविद्या सा नातीव कृत्वा क्वचिदुपयुज्यते, प्रत्युतास्तिक्यमुपहन्ति यो नातिनिपुणमति."। रामायणमहाभारतादावप्यस्ति निन्दाश्रुतिवेदविरुद्धाया एवान्वीक्षिक्या (१)। यतो न्यायवैशेषिकयोरिव लोकायतादिनास्तिकदर्शनेऽप्यान्वीक्षिकीशब्दस्य दृश्यते व्यवहारः। तथा चार्थशास्त्रे कौटिल्यः "सांख्यं योगो लोकायतञ्चेत्यान्वीक्षिकी"। (अध्या० २) अत्र न्यायवैशेषिकरूपशास्त्रद्वयमेव योगशब्देनाभिहितम्। न्यायशास्त्रपरतया 'योग' शब्दप्रयोगस्य बहुशो दृष्टचरत्वात्। गुणरत्नसूरिभिस्तु स्पष्टमुक्तं "षड्दर्शनसमुच्चयटीकायाम्"—"अथादौ नैयायिकानां यौगापराभिधानानां लिङ्गादिव्यक्तिरुच्यते। (पृ० ४९) अस्ति च वैशेषिकशास्त्रस्यापि 'योग'शब्देन व्यवहारः। तथा च "पत्रपरीक्षायां" विद्यानन्दस्वामी—"सदकारणवन्नित्यमिति योगवचो यथा"। "सदकारणव-

(१) "कच्चिन्न लोकायतिकान् ब्राह्मणांस्तात सेवसे।
अनर्थकुशला ह्येते बाला. पण्डितमानिनः॥
धर्मशास्त्रेषु मुख्येषु विद्यमानेषु दुर्बुधा।
बुद्धिमान्वीक्षिकीं प्राप्य निरर्थं प्रवदन्ति ते॥"

—रामा० अयो० १००-३८-३९.

"अहमासं पण्डितको हैतुको वेदनिन्दक।
आन्वीक्षिकीं तर्कविद्यामनुरक्तो निरर्थिकाम्॥
हेतुवादान् प्रवदिता वक्ता संसत्सु हेतुमत्।
आक्रोष्टा चाभिवक्ता च ब्रह्मवाक्येषु च द्विजान्॥
नास्तिक. सर्वशङ्की च मूर्खः पण्डितमानिकः।
तस्येय फलनिर्वृत्ति· शृगालत्वं मम द्विज"॥

—महा० मोक्ष० २८१। ४७-४९

क्तिनस्य" मित्यादिमं सूत्रं वैशेषिकदर्शनचतुर्थाध्यायस्येति जानन्त्येव विद्वांसः। आरम्भवादित्वेन प्रसिद्धौ नैयायिकवैशेषिकावेव 'योग'शब्दप्रतिपाद्यौ इति तु निश्चीयते 'पुरुषकर्मादिनिमित्तो भूतसर्गः, कर्म्महेतवो दोषाः प्रवृत्तिश्च स्वगुणविशिष्टाश्चेतनाः असदुत्पद्यते उत्पन्नं निरुध्यते इति योगानाम्" (१।१।२९) इति न्यायभाष्यग्रन्थदर्शनेन।

अपि च न्यायवैशेषिकयोरिव लोकायतादिनास्तिकदर्शनस्याप्यान्वीक्षिकीशब्देन व्यवहारविषयत्वं सुव्यक्तमस्ति राजशेखरकृतायां **काव्यमीमांसायाम्**—"द्विधा चान्वीक्षिकी पूर्वोत्तरपक्षाभ्याम्। अर्हद्भदन्तदर्शने लौकायतं च पूर्वः पक्षः। साङ्ख्यं न्यायवैशेषिकौ चोत्तरः।" (४ पृ०)

पूर्वामान्वीक्षिकीं सेवमाना एव वेदप्रामाण्यं नाङ्गीकुर्वन्ति शास्त्रमर्यादाञ्च लङ्घयन्ति, तेन स्वात्मनाशायैव व्यवस्यन्तीत्याह **महाभारतकारः**—

"अप्रामाण्यञ्च वेदानां शास्त्राणाञ्चातिलङ्घनम्।
अव्यवस्था च सर्वत्र एतन्नाशनमात्मनः॥
भवेत्पण्डितमानी यो ब्राह्मणो वेदनिन्दकः।
आन्वीक्षिकीं तर्कविद्यामनुरक्तो निरर्थिकाम्॥"
(अनु. ३७। ११-१२)

**मनुना**ऽप्युक्तम्—"योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद् द्विजः।
स साधुभिर्वहिष्कार्यो नास्तिको वेदनिन्दकः॥" (२। ११)

अत्र "हेतुशास्त्र"शब्दस्य वेदविरुद्धतर्कशास्त्रपरत्वं मेधातिथिकुल्लूकभट्टगोविन्दराज-नारायणप्रभृतिभिः सर्वैरेव व्याख्यातृभिः सुस्पष्टमभिहितम् (२)।

आचार्यशङ्करेणापि कठोपनिषद्भाष्ये "अतर्क्यमणुप्रमाणात्"दित्यत्र, "नैषा तर्केण मतिरपनेये"त्यत्र च तर्कशब्दस्य स्वबुद्धिमात्रपरिकल्पितकुतर्कपरत्वमेव व्याख्यातम् (३)। अतो जात्वपि नाशङ्कनीयं किमपि वैगुण्यं गौतमोक्तन्यायविद्यायाः। अस्या आत्मज्ञानसाधनत्वं कामन्दकीयनीतिसारेऽपि प्रतिपादितम्—

---

(२) "हेतुशास्त्रं नास्तिकतर्कशास्त्रं बौद्धचार्वाकादिशास्त्रं यत्र वेदोऽधर्मायेति पुनः पुनरुद्घोष्यते तादृशं तर्कमाश्रित्य,"—मेधातिथिः।

"हेतुशास्त्राश्रयाद् वेदवाक्यमप्रमाणं वाक्यत्वात् विप्रलम्भकवाक्यवदित्यादिप्रतिकूलतर्कोपष्टम्भेन चार्वाकादिनास्तिक इव। नास्तिको यतो वेदनिन्दकः।—कुल्लूकभट्टः। "असत्तर्कशास्त्रावलम्बनेन निन्देत् नास्ति परलोक इत्येवं स्थितप्रतिज्ञो वेदनिन्दकः।—गोविन्दराजः। "हेतुशास्त्रं श्रुतिविरोधि तर्कशास्त्रम्।—नारायणः।

(३) स्वबुद्ध्याभ्यूहेन केवलेन तर्केण। न हि कुतर्कस्य प्रतिष्ठा क्वचिद् विद्यते। नैषा तर्केण स्वबुद्ध्यभ्यूहमात्रेण। कठभाष्यम्, १।२। २—९।

"आन्वीक्षिक्यात्मविज्ञानं धर्म्माधर्म्मौ त्रयीस्थितौ ।
अर्थानर्थौ तु वार्त्तायां दण्डनीत्यां नयानयौ ॥"
"आन्वीक्षिक्यात्मविद्या स्यादीक्षणात् सुखदुःखयोः ।
ईक्षमाणस्तया तत्त्वं हर्षशोकौ व्युदस्यति ॥"
२ सर्गः; विद्याविभागप्रकरणम्, ७—११ ।

उपासनेवाऽऽन्वीक्षिकी विद्यापि भगवत्कृपाप्रापिकेत्युक्तं श्रीमद्भगवता स्वयमेव । यथा—

"यमादिभिर्योगपथैरान्वीक्षिक्या च विद्यया ।
ममार्चोपासनाभिर्वा नान्यैर्योग्यं स्मरेन्मनः ॥"
( भाग०, ११।२० । २४ )

न्यायविद्याया आत्यन्तिकदुःखोपरमरूपनिःश्रेयसाधिगमस्य परमप्रयोजनत्वेऽपि सर्वमपि प्रेक्षावत्प्रयोजनमान्वीक्षिकीव्युत्पाद्यप्रमाणमूलम् । अत एवोक्तं **न्यायवार्त्तिकतात्पर्यटीकायाम्** "नास्त्येव तत् प्रेक्षावतां प्रयोजनं यत्रान्वीक्षिकी न निमित्तं भवती"ति ( ४७ पृ० ) **वात्स्यायनेनापि** प्रकटीकृतमेतत् "सेयमान्वीक्षिकी प्रमाणादिभिः पदार्थैर्विभज्यमाना प्रदीपः सर्वविद्यानामुपायः सर्व्वकर्म्मणाम् । आश्रयः सर्व्वधर्म्माणां विद्योद्देशे प्रकीर्त्तिता (१।१।१) इतिप्रतीकैः ।

चाणक्यापराभिधानवात्स्यायनेन स्वरचितार्थशास्त्रेऽपि त्रय्यादिविद्याचतुष्टयेषु आन्वीक्षिक्या एव सर्व्वोपयोगित्वं प्रदर्शितम्—"आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिश्चेति विद्याः । धर्म्माधर्म्मौ त्रय्याम् । अर्थानर्थौ वार्त्तायाम् । नयानयौ दण्डनीत्याम् । बलाबले चैतासां हेतुभिरन्वीक्षमाणा लोकस्योपकरोति, व्यसनेऽभ्युदये च बुद्धिमवस्थापयति, प्रज्ञावाक्यक्रियावैशारद्यं च करोति ।

प्रदीपः सर्वविद्यानामुपायः सर्वकर्म्मणाम् । आश्रयः सर्वधर्म्माणां शश्वदान्वीक्षिकी मता ॥ इति विनयाधिकारिके प्रथमेऽधिकरणे विद्यासमुद्देशे आन्वीक्षिकीस्थापना द्वितीयोऽध्यायः ॥"

[ इदमत्रावधेयम्—"प्रदीपः—विद्योद्देशे प्रकीर्त्तिते"त्येवमानुपूर्व्या श्लोकस्यास्य न्यायभाष्येप्युद्धृतत्वादर्थशास्त्रन्यायभाष्ययोरेककर्त्तृकत्वमितिप्रवादस्य सयुक्तिकत्वमेव प्रतिभाति । यतः श्लोकस्य तुरीयपादस्य 'विद्योद्देशे प्रकीर्त्तिते'त्येवं परिवर्त्तितत्वाद् व्यज्यते तावत् भाष्यकारस्यायमाशयो यन्मयैवार्थशास्त्रस्य विद्यासमुद्देशपरिच्छेदे आन्वीक्षिक्याः प्राधान्यमुद्घोषितमिति । ]

जगदेव दुःखपङ्कमग्नमुद्दिधीर्षुः परमकारुणिको महर्षिरक्षपादश्चतुर्दशविद्यास्वभ्यर्हिततमामिमामान्वीक्षिकीं सूत्राकारेण निबध्नन्, न खलु नवं प्रणिनाय,

यतः परमोपयोगिनीयं न्यायविद्या वेदवद् विश्वस्रष्टुर्भगवत एवोत्पादमाससादेति विदुरं प्रति मैत्रेयवाक्यादवगम्यते—तथा च भागवते—

"आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिस्तथैव च।
एवं व्याहृतयश्चासन् प्रणवो ह्यस्य दह्रतः। ( ३ । १२ । ४४ )

"न्यायादीनां पूर्व्वादिक्रमेणोत्पत्तिमाह—आन्वीक्षिकीति।

आन्वीक्षिक्याद्या मोक्षधर्म्मकामार्थविद्याः। "दह्रतः-हृदयाकाशात्"। (स्वामिटीका।) श्रुतिरपि श्रूयते-"तस्मै तस्य महतो भूतस्य निःश्वसितमेवैतदृग्वेदो यजुर्वेदः सामवेदोऽथर्व्ववेद. शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषामयनं न्यायो मीमांसा धर्म्मशास्त्राणीत्यादि।—सुबालोपनिषद्, २य खण्ड।

अयमेवार्थः स्पष्टीकृतो न्यायमञ्जर्यां जयन्तभट्टेन—

"नन्वक्षपादात् पूर्व्वं कुतो वेदप्रामाण्यनिश्चय आसीत्। अत्यल्पमिदमुच्यते। जैमिनेः पूर्व्वं केन वेदार्थो व्याख्यातः पाणिनेः पूर्व्वं केन पदानि व्युत्पादितानि, पिङ्गलात् पूर्व्वं केन छन्दांसि रचितानि। आदिसर्गात् प्रभृति वेदवदिमा विद्याः प्रवृत्ताः। संक्षेपविस्तारविवक्षया तु तांस्तांस्तत्र तत्र कर्त्तृ़नाचक्षते" ( ५ पृ० )

अत एव न्यायभाष्यान्ते वात्स्यायनेन महर्षेरक्षपादस्य न्यायविद्यायाः कर्तृत्वमनुक्त्वा वदतां वरं तस्मिन्नियं प्रतिभाताऽभवादित्येवमभिहितम् (४)। उद्द्योतकरेणापि न्यायवार्त्तिकारम्भे "यदक्षपादः प्रवरो मुनीनां, शमाय शास्त्रं जगतो जगाद"त्यत्र नोक्तं 'चकारे' ति।

महर्षिकणादप्रवर्त्तितं वैशेषिकशास्त्रमपि न्यायविद्याया एव समानतन्त्रं तत्रापि श्रवणानन्तरप्राप्तमनननिर्व्वाहकपदार्थनिरूपणसत्त्वात्। तथा चोक्तं जगदीशेन तर्कामृते—

"मननं चात्मन इतरभिन्नत्वेनानुमानम्। तच्च भेदप्रतियोगीतरज्ञानसाध्यम्, तथा च इतर एव के तदर्थं पदार्थनिरूपणं सक्षेपतः क्रियते। सामान्यतः पदार्थो द्विविधो भावोऽभावश्चेति ( १ पृ० )।

द्रव्यादिपदार्थज्ञानमन्तरेण न तावदात्मन्यात्मेतरभेदः साधयितुं शक्य इति तु कृतमुक्तेन। न्यायवैशेषिकयोरुद्देश्यसाम्यात्न्न खलु तयोः परस्परं प्रायो विरोध इत्यतो न्यायसूत्रतात्पर्यविवृतौ न्यायमञ्जर्यां पदवाक्यप्रमाणपारावारीणजयन्तभट्टेनोक्तम्-"वैशेषिकाः पुनरस्मदनुयायिन एवेति"। अतएव तर्करहस्यदीपिकाख्यायां षड्दर्शनसमुच्चयटीकायां ( ४ पृ० ) गुणरत्नसूरिणापि भणितं—

---

( ४ ) योऽक्षपादमृषिं न्याय. प्रत्यभाद्वदतां वरम्।
तस्य वात्स्यायन इदं भाष्यजातमवर्त्तयत्॥

"नैयायिकवैशेषिकानां हि मिथः प्रमाणतत्त्वानां संख्याभेदे सत्यपि अन्योन्यं तत्त्वानामन्तर्भावनेऽल्पीयानेव भेदो जायते । तेनैतेषां प्रायो मततुल्यता (५ पृ०) ।

अथ गौतमोक्ताः प्रमाणप्रमेयादयः षोडशपदार्थाः वैशेषिकदर्शनोक्तेषु सप्तसु पदार्थेष्वन्तर्भवन्तीति बहुधा प्रतिपादितं ग्रन्थकृद्भिः । परन्तु द्रव्यादीनां न्यायदर्शनोक्ते कुत्र पदार्थेऽन्तर्भावः? न च ते प्रमेय एवान्तर्भवितुमर्हन्ति, यतः "आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्" (१-१-९) इति सूत्रे महर्षिणात्मादीनामेव प्रमेयत्वं परिभाषितम्, इति चेत्, न, येषां तत्त्वज्ञानादपवर्गो मिथ्याज्ञानात् संसारस्तेषामेव पदार्थानां प्रतिपिपिसितत्वात् । अत एव न्यायभाष्यं—"अस्त्यन्यदपि द्रव्यगुणकर्मसामान्यविशेषसमवायाः प्रमेयम् । तद्भेदेन चापरिसंख्येयम् । अस्य तु तत्त्वज्ञानादपवर्गो मिथ्याज्ञानात् संसार इत्यत एतदुपदिष्टं विशेषेणेति" (१।१।९) न्यायमञ्जरीकृतापि सिद्धान्तितं "प्रमाणे एव ज्ञाते सति तद्विषयोऽर्थः प्रमेयमिति प्रज्ञायते एव किं तेन लक्षितेन । तस्माद् विशिष्टमिह प्रमेयं लक्ष्यते ।

"ज्ञातं सम्यगसम्यग् वा यन्मोक्षाय भवाय वा ।
तत्प्रमेयमिहाभीष्टं न प्रमाणार्थमात्रकम् ॥"—४२७ पृ०

नन्वेवं द्रव्यगुणादिपदार्थानां तत्त्वज्ञानमपि मोक्षप्रयोजकम् । अत एव कणादेन सूत्रितं—"धर्मविशेषप्रसूताद् द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम्" इति । तथा च निःश्रेयसोपयोगीनि द्रव्यादीनि प्रमेयान्तराणि कुतो न लक्षितानि अक्षपादेनेति चेदत्र **वरदराजः**—"मोक्षे साक्षादनङ्गत्वादक्षपादेन लक्षितम् । तन्त्रान्तरानुसारेण षट्कं द्रव्यादि लक्ष्यते । सत्यं द्रव्यादीन्यपि निःश्रेयसोपयोगीनि विद्यन्ते, तानि त्वाहृत्य निःश्रेयसानङ्गत्वादक्षपादा न लक्षयाञ्चक्रुः । वयं तु तेषामपि परम्परया तदुपयोगोऽस्तीति कणादतन्त्रमनुसृत्य लक्षणमाचक्ष्महे इति । तानिदानीं पदार्थानुद्दिशति ।

"द्रव्यं गुणस्तथा कर्म जातिश्चैतत्त्रयाश्रया ।
विशेषः समवायश्च पदार्थाः षडिमे मताः ॥"

**न्यायसूत्रविवरण**कृद्गोस्वामिभट्टाचार्योऽप्याह—"आत्मत्वादिकं न प्रमेयमात्रविभाजकं संयोगादीनामपि प्रमेयत्वाद् द्वादशधेति विभागानुपपत्तेः, किन्तु मोक्षहेतुप्रमेयविभाजकम् । तथा च तुशब्दः पुनरर्थे । एते पुनः प्रमेयं प्रकर्षेण मेयम् । प्रकर्षश्च मोक्षहेतुज्ञानविषयत्वम् । अथ वा तुशब्दश्चार्थे । तथा चोक्तानुक्तसमुच्चयलाभः । एवं प्रमेयमात्रस्य साक्षात् परम्परया वा मोक्षविभाजकत्वेऽपि न

क्षतिः। आत्मादीनां च प्राधान्येन विशेषनिर्देशः। तत्रापि पूर्वपूर्वप्राधान्यात् पूर्वपूर्वक्रमनिर्देशः।" ( १९ पृ० )।

न्यायसूत्रकृद्भिरात्माद्यतिरिक्तानामपि सामान्यतः प्रमेयत्वमभ्युपेयत इत्यत्र "प्रमेया च तुलाप्रामाण्यवदिति ( २।१।१५ ) सूत्रमेव प्रमाणम्। तत्र तुलाद्रव्यस्यापि प्रमेयत्वव्यवस्थापनात्। तथा च सुष्ठूक्तमुद्द्योतकरेण—"न प्रमेयान्तरनिराकरणार्थः सूत्रारम्भः मुमुक्षुणा प्रमेयमेतदात्मादि बोद्धव्यमेव। नास्य प्रमेयत्वं विधीयते नान्यस्य च प्रमेयत्वं निराक्रियते (१।१।९)।

ननु प्रमाणतत्त्वज्ञानमन्तरेण प्रमेयतत्त्वज्ञानमसम्भवीति भवतु पृथगभिधानं प्रमाणस्य, संशयादेः पृथगुल्लेखश्च किमर्थं ? द्रव्यादीनामिव तेषामपि साक्षान्निःश्रेयसानुपयोगादित्याशङ्काया वार्त्तिकग्रन्थेनैव निराकृतत्वात्। तथा च न्यायवार्त्तिकम्—"संशयादयः प्रमेयेऽन्तर्भवन्तीति पृथक् ते न वक्तव्याः। न, विद्याप्रस्थानभेदज्ञापनार्थत्वात्। चतस्र इमा विद्या भवन्ति ताश्च पृथक्प्रस्थानाः। अग्निहोत्रहवनादिप्रस्थाना त्रयी। हलशकटादिप्रस्थाना वार्त्ता। स्वाम्यमात्यभेदानुविधायिनी दण्डनीतिः। संशयादिभेदानुविधायिनी आन्वीक्षिकी। तस्याः संशयादिप्रस्थानमन्तरेणात्मविद्यामात्रमियं स्यात्, ततः किं स्यात् अध्यात्मविद्यामात्रत्वादुपनिषद्विद्यावत् तस्यामेवान्तर्भाव इति चतुष्ट्वं निवर्त्तेत तस्मात् पृथक् गृह्यन्त इति।" ( १२ पृ० ) एवं च प्राधान्येन पृथगनुद्दिष्टत्वेऽपि काणादतन्त्रोक्तद्रव्यगुणादीनां यथायथं निर्वचनं न्यायसूत्रकृताऽपि न खलु नानुमतम्। अत एव "सगुणद्रव्योत्पत्तिवत् तदुत्पत्तिः" ( ३।१।२६ ) "द्रव्यगुणधर्मभेदाच्चोपलब्धिनियमः" ( ३।१।३६ ) "गन्धरसरूपस्पर्शपर्यन्ताः पृथिव्याः" ( ३।१।६१ ) "अप्तेजोवायूनां पूर्वमपोह्याकाशस्योत्तरः" ( ३।१।६२ ) इत्यादिन्यायसूत्राण्यपि साधु सङ्गच्छन्ते इति।

## अन्नम्भट्टपरिचयः

अथैतयोर्न्यायवैशेषिकशास्त्रयोः स्मरणाऽतीतकालमारभ्य विद्वत्प्रवेकैरनेकैर्बहवो ग्रन्थाः समुपनिबद्धाः। तत्र च विषयगौरवेण सारल्येन परिमिताक्षरतया च श्रीमदन्नम्भट्टेन विदुषा रचितस्तर्कसंग्रहः प्राथमिकपाठार्थिनामत्यन्तमुपकरोतीति काश्यादिनानाजनपदेषु निर्दिष्टोऽयं प्रथमपरीक्षायाम्। अस्य खलु नितरामुपकारकस्य ग्रन्थस्य पठनपाठनाऽवसरे यथा प्राचामाचार्याणां ग्रन्थपरिचयोऽप्यनायासेन स्यात्, स्याच्च तत्तत्पदार्थविषये तन्त्रान्तराणामन्येषामप्यवबोध ईषत्करस्तथा विरचय्य ध्रुवपदाऽभिधानां विवृतिं प्रकाश्यते तावदिदमभिनवं संस्करणं तर्कसंग्रहस्य तर्कदीपिकया न्यायबोधिन्या च सनाथस्य। अत्र चाऽन्ते भाषानुवादस्य प्रश्नोत्तरमालायाश्च सन्निवेशः कृतो येन स्यात् परीक्षार्थिनामुपकारवैशद्यमपि सद्यः।

अन्नम्भट्टः खलु कस्मिन् समये कतमं देशं स्वजनुषा भूषयामास, तत्र चाऽस्ति विप्रतिपत्तिः प्रेक्षावताम् ।

केचित्तु अन्नम्भट्टो नाम तैलङ्गब्राह्मणस्तस्य जन्मभूमिश्च गरिकपाडनामको ग्रामः, यस्तावदधिकृत आसीद् यवनराजेन निज़ाम आलीति प्रसिद्धेन । स तावदन्नम्भट्टश्चालुक्यनरपतीनां समये पञ्चदशशतके ख्रिष्टवर्षस्याऽऽविर्भूय भूयसा श्रमेण द्वादशवत्सराणि यावत् कौण्डिन्यपुरे न्यायशास्त्रमधीत्य नैयायिकेषु महतीं प्रतिष्ठामाप । तेन च स्वजन्मभूमौ कापि पाठशाला प्रतिष्ठापिता, यत्र तेन स्वयमध्याप्यन्ते स्म—तर्कसंग्रहः तर्कदीपिका, सिद्धान्तमुक्तावली, गादाधरी च । स खलु सकृदेव निर्गत्य स्वग्रामात् पञ्चाशत्तमवयोवर्षे मल्लिकार्जुनतीर्थदर्शनमकरोदिति वदन्ति (५)।

तन्नाऽस्माकं मनोरमम्,—यतः—ख्रिष्टीयपञ्चदशशतके चालुक्यनरपतीनामस्तित्वमसम्भवदुक्तिकम्, त्रयोदशशतक एव तेषां यशोमात्रावशेषत्वात् । किञ्च 'तर्कसंग्रह'कारस्य विश्वनाथकृतायाः 'सिद्धान्तमुक्तावल्याः' पाठनाऽपि नोपपद्यते । तथा च तमसः क्लृप्तद्रव्येष्वन्तर्भावनिरासाय 'तर्कसंग्रहदीपिका'कारेणोक्तम्—'तत्र तमसो नाकाशादिपञ्चकेऽन्तर्भावो रूपवत्त्वात् । अत एव न वायौ, स्पर्शाभावात् सदागतिमत्त्वाभावाच्च । नापि तेजसि, भास्वररूपाभावादुष्णस्पर्शाभावाच्च । नापि जले, शीतस्पर्शाभावान्नीलरूपाश्रयत्वाच्च ।" इति ।

'सिद्धान्तमुक्तावली'कारेण चोक्तम्—'तद्धि गन्धशून्यत्वान्न पृथिवी, नीलरूपवत्त्वाच्च न जलादिकम् ।' इति ।

एतेन 'मुक्तावली'कारस्य 'दीपिका'कारादर्वाचीनत्वमेव प्रतीयते, एकेनैवाऽनुगतेन नीलरूपेण हेतुना जलाद्यष्टकभेदसिद्धेः शीतस्पर्शाभावादीनामननुगतानां 'दीपिका'कृत्प्रदर्शितानां 'मुक्तावल्यां' परित्यागात् । तदुक्तं 'मुक्तावलीप्रकाश'-व्याख्यानावसरे रामरुद्रभट्टाचार्यैः—

"एतेन प्राचीनग्रन्थेषु जलादिभेदसाधने नानाहेतूपन्यासो व्यर्थप्रयास इति सूचितम् ।"

अपि च 'मृदुत्वकठिनत्वयोरवयवसंयोगविशेषरूपत्वादिति' 'दीपिका'ग्रन्थो दूषित इव मुक्तावलीकारेण । तथा च गुणनिरूपणे—'कठिनत्वादिकन्तु न संयोगगतो जातिविशेषः चक्षुर्ग्राह्यत्वापत्तेः ।'

एवञ्च 'तर्कसंग्रह'कृतो मुक्तावलीपाठना कथं सम्भवतीति सुधीभिरेव चिन्तनीयम् ।

---

(५) 'महाराष्ट्रीयज्ञानकोश' कारा. । ( षष्ठभागे ११० पृष्ठे )

विश्वनाथस्तु गौतमसूत्रवृत्तिसमाप्तौ तत्प्रणयनकालमेवमाह—

"रसवाणतिथौ शकेन्द्रकाले
बहुले कामतिथौ शुचौ सिताहे ।
अकरोन्मुनिसूत्रवृत्तिमेतां
ननु वृन्दाविपिने स विश्वनाथः ॥"

एतत्पद्येन १५५६ शकवर्षे ( खृः १६३४ ) गौतमसूत्रवृत्तिनिबन्धनसमयः प्रतिपादितः । प्रागुक्त'कोश'कारेण च खृष्टीयपञ्चदशशतके 'तर्कसंग्रह'कारस्याऽऽविर्भावकालस्य निर्द्धारिततया तात्कालिकेनाऽन्नम्भट्टेन कथं विश्वनाथप्रणीता सिद्धान्तमुक्तावली पाठितेत्यस्य रहस्यं स एव जानाति ।

'गादाधरी' पाठनाप्यन्नम्भट्टस्य न खलु सङ्गच्छते, गदाधरस्य सप्तदशखृष्टाब्दे समवस्थितत्वात् ।

"तर्कदीपिकायां" 'काञ्च्यां त्रिभुवनतिलको भूपति'रिति ग्रन्थसन्दर्भदर्शनेन त्रिभुवनतिलकाभिधानकाञ्चीराजसमये स्थितिरासीदन्नम्भट्टस्येति केचिन्मन्यन्ते ।

तदपरे न क्षमन्ते । 'त्रिभुवनतिलक'नामधेयः कश्चिन्नरपतिः कदापि काञ्च्यां नासीदिति तेषामाशयः ।

परन्तु 'राजराजनुला'नामिकायां तामिलभाषानिबद्धपुस्तिकायामस्ति—द्वितीयकुलोत्तुङ्गचोडस्य 'राजराजा'भिधेयः पुत्र एको विरराज । 'त्रिभुवनचक्रवर्त्ती'तिबिरुदेन स खलु बभूव भूवलये परिचित इति च ज्ञायते काञ्चीपुरस्थे एकाम्रनाथमन्दिरे समुत्कीर्णाभिर्लिपिभिः । अयं तावद् राजराजः १०६८ शाकवर्षे (११४६ खृष्टाब्दे) सिंहासनमारुरोह (६) । श्रीमदन्नम्भट्टेन 'त्रिभुवनतिलक' इति नाम्ना काञ्चीनाथो निरुक्तो राजराज एव समाम्नातो न वेति प्रत्नतत्त्वविद्भिर्विचारणीयम् ।

वेबारनामधेयेन पाश्चात्त्यविपश्चिता स्वदृष्टस्य कस्यचित् तर्कसंग्रहस्य लिपिकालः १४२५ खृष्टवर्षात्मको निर्णीतः (७) । तदवलोकिते च 'तर्कसंग्रहे' श्लोकोऽयं सन्निवेशितोऽस्ति—

"तपोमास्यसिते कृष्णे चन्द्रनागाब्धिचन्द्रकैः ।
वाराणस्यां मिते वर्षे स्वार्थमिन्दुर्लिलेख वै ॥"

अत्र च 'चन्द्रनागाब्धिचन्द्रकैर्मिते वर्षे' इत्यनेन प्रतिपादिते १४८१ तमे सम्वति (१४२५ खृः ) तत्पुस्तकमभूल्लिखितमिति तस्याभिमतम् । तच्च केचिन्नानुमोदन्ते । तदुक्तम्—"अब्धि Ought to be taken for 7 and not 4, and

---

(६) वङ्गेर जातीय इतिहास, वैश्यकाण्ड, २२० पृ० ।

(७) Weber's Berlin Catalogue, No 683, p. 203.

then the date becomes 1725 H. D." —( Bombay Sanskrit Series प्रकाशिततर्कसंग्रहस्य LXIII पृष्ठे) परन्तु 'अङ्घिपर्यायशब्दानां ४ बोधकत्वं 'हरिणी न्सौ म्रौ स्लौ गृतुसमुद्रऋषयः' [ पि० छ० सू० ] इत्यादिषु प्रसिद्धं कथमत्र परित्याज्यमित्यस्मिन् विषये किमपि बलवत् प्रमाणं नोपलभ्यते। तथा च 'तर्कसंग्रहदीपिकायां' 'त्रिभुवनतिलक'इत्युपनामसमुल्लेखेन, 'इन्दु'नामकेन च केनचित् १४२५ खृष्टवर्षे स्वकीयपाठार्थं 'तर्कसंग्रह'स्य लिखितत्वेन त्रयोदशशतके स्थितिरासीदन्नम्भट्टस्येति सम्भाव्यते।

अन्नम्भट्टः खलु सूनुरासीदद्वैतविद्याचार्यराघवसोमयाजिकुलावतंसतिरुमलस्येति तत्कृत'दीपिका'ऽन्तिमलेखेनाऽवगम्यते। शर्मण्यदेशीयविद्वत्प्रवरेण ज्याकविना समुपलब्धायां 'तर्कसंग्रहदीपिकायां' १६३४ शाकाब्दे ( १७१२ खृ० ) लिखितायाम्—

"इति श्रीमदद्वैतविद्याचार्य-श्रीमद्राघवसोमयाजिकुलावतंस-श्रीमत्तिरुमलाचार्य्यवर्यस्य सूनुनाऽन्नम्भट्टेन कृता स्वकृततर्कसंग्रहस्य दीपिका सम्पूर्णा।" इत्येवमक्षराणि सन्ति।

अन्ये तु—"एतादृशस्य चास्य तर्कसंग्रहस्य रचयिता श्रीमान् अन्नम्भट्टः, आन्ध्रेषु कृष्णाया नद्याः पावनेन पवनेन परिशीतलं किमपि भूखण्डमात्मना मण्डयामासेत्यवगम्यते। 'अन्नम्भट्ट' इति प्रसिद्धाभिजनविरुदा ऋग्वेदिनो द्विजन्मानः कृष्णातीरोपान्तवर्त्तिनि केशवपुराभिधे ग्रामे सांप्रतमपि सन्तीति शृणुमः। अयं हि पण्डितमणिः श्रीराघवसोमयाजिकुले समुत्पन्नश्रीतिरुमलाचार्यवर्यस्य सूनुरित्यवगच्छामः, यतोऽनेनैव महापण्डितेन विरचिते कैयटव्याख्याने इति श्रीमहामहोपाध्यायाद्वैतविद्याचार्यराघवसोमयाजिकुलावतंसश्रीतिरुमलाचार्यवर्यस्य सूनोरन्नम्भट्टस्य कृतिषु भाष्यप्रदीपोद्योतने' इत्येवं तत्तदाह्निकावसाने वर्णावलिरवलोक्यते। अस्य च अग्रजो महापण्डितो रामकृष्णभट्टः, येन सिद्धान्तकौमुद्याः सिद्धान्तरत्नाकरं नाम व्याख्यानमाविष्कुर्वता नागेशभट्टादीनामपि मार्गदर्शिना बभूवे इति कतिचन कथयन्ति। मल्लिनाथात्परस्तात् पुरस्ताच्च भट्टोजिदीक्षितादयं महाशय आसीदिति तु विश्वसन्ति बहवः।"—इति व्याहरन्ति (८)। तच्चिन्त्यम्।

अनेन च पण्डितप्रकाण्डेनाऽन्नम्भट्टेन 'मिताक्षरा', 'भाष्यप्रदीपोद्योतनम्', इत्यभिधेयं व्याख्यानद्वयमपि प्राणीयत। तत्र 'मिताक्षरा' नाम कतमस्य ग्रन्थस्य व्याख्यानरूपेत्यत्रास्ति विप्रतिपत्तिः। सा च बादरायणकृतब्रह्मसूत्रटीकेति केचित्। अन्ये तु सा पाणिनीयसूत्रवृत्तिरिति मन्यन्ते।

---

(८) बालमनोरमायन्त्रप्रकाशित-तर्कसंग्रह-भूमिकाकारा.।

# गोवर्द्धनमिश्रपरिचयः

'न्यायबोधिनी'प्रणेता गोवर्द्धनमिश्रस्तु मिथिलादेशीयो विद्वत्प्रवर इति निश्चितप्रायम्। अस्य खलु बलभद्रः पिता, विजयश्रीर्माता, विश्वनाथः पद्मनाभश्चाऽग्रजाविति प्रतीयते। तथा च तत्कृतायां 'तर्कभाषाप्रकाशा'भिधेयायां 'तर्कभाषा'टीकायाम्—

"विजयश्रीतनूजन्मा गोवर्द्धन इति श्रुतः।
तर्कानुभाषां तनुते विविच्य गुरुनिर्मितिम्॥
श्रीविश्वनाथानुजपद्मनाभा-
नुजो गरीयान् बलभद्रजन्मा।
तनोति तर्कानधिगम्य सर्वान्
श्रीपद्मनाभाद्विदुषो विनोदम्॥"

ज्यायस एव पद्मनाभादसौ तर्कशास्त्रमधिगतवानिति 'तर्कानधिगम्य सर्वान् श्रीपद्मनाभा'दित्यंशेनाऽवगम्यते।

केचित्तु 'गुरुनिर्मितिं तर्कानुभाषां विविच्य तनुत' इति लेखदर्शनेन गोवर्द्धनमिश्र'स्तर्कभाषा'कृतः केशवमिश्रस्य शिष्य इति वदन्ति (९)। तच्चिन्त्यम्, 'गुरुनिर्मिति'मित्यत्र 'गुरु' शब्दस्य वैशिष्ट्यार्थकत्वेऽपि सङ्गतत्वात्, 'तर्कानधिगम्य सर्वान् श्रीपद्मनाभा'दिति समस्ततर्कशास्त्रस्य स्वाऽग्रजात् पद्मनाभमिश्रादध्ययनोक्तेर्विरुद्धत्वाच्च।

गोवर्धनजनको बलभद्रमिश्रस्तु न्यायवेदान्तादिनानाशास्त्रनिष्णातः परमपण्डित आसीत्। तेन च युक्तिकल्पद्रुमादयो दार्शनिकसन्दर्भा विरचिताः (१०)।

गोवर्द्धनगुरुः पद्मनाभः पितृदेवतो बलभद्रमिश्रादेव शास्त्राण्यधीतवानिति स्वप्रणीते प्रशस्तपादभाष्यसेतौ किरणावलीभास्करे च स्वयमेव तेन प्रकटीकृतम् (११)। पद्मनाभमिश्रेण कारिकामयो राद्धान्तमुक्ताहारस्तस्य

(९) तर्कतीर्थश्रीसुरेन्द्रलालगोस्वामिन स्वसंस्कृताया. सटीकतर्कभाषाया विज्ञापने।

(१०) किरणावलीभास्करभूमिका द्रष्टव्या।

(११) स्मृतिपथमुपनीय श्रीमतस्तातवक्त्रा-
दुचितमुपचितार्थं वाक्यमत्यादरेण।
जयति विरचितोऽसौ पद्मनाभेन यत्ना-
दुदयनकृतिपारप्राप्तये सेतुरुच्चै॥ —सेतुः, २ पृ०
बलभद्रमुखाम्भोजवचनादुदयाचलात्।
उदितो भास्करस्तस्मादादरेण निपेध्यताम्॥ —भास्कर०, १ पृ०

कणादरहस्यनामकं व्याख्यानञ्च प्रणीतम् (१२)।

बलभद्रमिश्रो नाम प्रगल्भभट्टाचार्यस्य शिष्य इति 'अस्मत्पितृचरणाराध्याः श्रीप्रगल्भभट्टाचार्य्यास्त्वि' ति सेतुग्रन्थसन्दर्भेण, 'यद् यदत्र विनिक्षिप्तं नव्यं सिद्धान्तवर्त्तिना। पद्मनाभेन तैः प्रीतः प्रगल्भोऽस्तु गुरोर्गुरुः॥' इतिकणादरहस्याऽन्तिमश्लोकदर्शनेन चाऽवगम्यते (१३)।

गोवर्द्धनमिश्रस्य गुरुर्ज्येष्ठभ्राता च पद्मनाभमिश्रो बुन्देलखण्डघटकववेलाधिपस्य महाराजाधिराजस्य रामचन्द्रदेवस्य सूनोर्वीरभद्रस्य समाश्रित आसीदिति—

"बलवशीकृतदुर्दमभूपतिर्निजभुजार्जितलोकसमुन्नतिः।
अगतिकार्थिजनस्य परा गतिर्जयति वीरवरः पृथिवीपतिः॥"

तदीयसेतुश्लोकात्, वीरभद्रदेवचम्पूप्रणयनाच्चाऽनुमीयते। युवराजवीरभद्रस्तु वात्स्यायनकृतकामसूत्रस्य कामपि टीकां कन्दर्पचूडामणिनामिकां प्रणिनाय। अयञ्च टीकाग्रन्थः १६३३ वैक्रमाब्दे (१५७६ खृष्टवर्षे) निर्मित इति—

"हरलोचनहरलोचनरसशशिभिर्विश्रुते समये।
फाल्गुनशुक्लप्रतिपदि पूर्णो ग्रन्थः स्मरस्मेरः॥"

इत्येवं तत्रत्यश्लोकात् प्रतीयते। एवञ्च वीरभद्रसमकालिकपद्मनाभमिश्रानुजत्वात् खृष्टीयसप्तदशशतकप्राथमिकपादे गोवर्धनमिश्रः प्रणिनाय न्यायबोधिनीमिति सम्भाव्यते। युवराजवीरभद्रपद्मनाभमिश्रयोः समयनिरूपणपरिपाटी तु काशिक-

---

(१२) आरचय्य प्रयत्नाद्यैरिहैकाशीतिकारिका।
आचार्यपद्मनाभेन व्याख्या सम्प्रति तन्यते॥........

इति श्रीसन्मिश्रश्रीजगद्गुरुबलभद्रात्मजविश्वनाथानुजविजयश्रीगर्भसम्भवसकलशास्त्रारविन्दप्रद्योतनभट्टाचार्यमिश्रश्रीमत्पद्मनाभकृतौ स्वकृतराद्धान्तमुक्ताहारव्याख्याने कणादरहस्यं समाप्तमिति।

(१३) प्रगल्भट्टाचार्यस्तु तार्किकशिरोमणेः श्रीमतो रघुनाथस्य पूर्ववर्त्ती समसमयस्थितिको वा, यतस्तेन व्यधिकरणधर्मावच्छिन्नाभावदीधितौ प्रगल्भस्य व्याप्तिलक्षणमुपन्यस्य दूषितमिति दृश्यते। तदुक्तं जगदीशेन दीधितिव्याख्यानावसरे—

"प्रगल्भेनोक्तं लक्षणं दूषयितुमुपन्यस्यतीति"।

एतेन गोवर्धनपितुर्बलभद्रस्य प्रगल्भशिष्यतया गोवर्धनेन च तर्कसंग्रहस्य व्याख्याया न्यायबोधिन्याख्याया रचितत्वेनाऽनन्मभट्टस्याऽस्मदवधारितकालावस्थायित्वमेवायाति। इति सुधीभिरेव विवेचनीयम्।

राजकीयसंस्कृतपाठशालाध्यक्षेण मित्रवरेण श्रीमता गोपीनाथकविराज एम. ए. महोदयेन सम्पादितस्य किरणावलीभास्करस्य भूमिकायां द्रष्टव्या ।

क्षोदीयसोऽपि 'तर्कसंग्रहस्य' बहुटीकादर्शनादस्य सुदीर्घकालत एव पठन पाठनप्राचुर्यमवधार्यते । तत्र तर्कसंग्रहस्याऽधोलिखिताष्टीकास्तेन तेन विदुष प्रणीताः श्रूयन्ते—

| | |
|---|---|
| १—न्यायबोधिनी | गोवर्धनमिश्रेण |
| २—सिद्धान्तचन्द्रोदयः | श्रीकृष्णधूर्जटिदीक्षितेन |
| ३—पदकृत्यम् | चन्द्रजसिंहजेन |
| ४—तर्कसंग्रहतत्त्वप्रकाशः | नीलकण्ठेन |
| ५—तर्कसंग्रहटिप्पणी | पट्टाभिरामेण |
| ६—तर्कसंग्रहवाक्यार्थनिरुक्तिः | ? |
| ७—तर्कसंग्रहचन्द्रिका | मुकुन्दभट्टेन |
| ८—वाक्यवृत्तिः | मेरुशास्त्रिणा |
| ९—तर्कसंग्रहटीका | अनन्तनारायणेन |
| १०—तर्कफक्किका | क्षमाकल्याणेन |
| ११—न्यायार्थलघुबोधिनी | गोवर्धनरङ्गाचार्येण |
| १२—तर्कसंग्रहटीका | गौरीकान्तेन |
| १३—तर्कसंग्रहतरङ्गिणी | विन्ध्येश्वरीप्रसादेन |
| १४—तर्कचन्द्रिका | वैद्यनाथेन |

ग्रन्थकृत्प्रणीतायास्तर्कसंग्रहदीपिकायाः सुगृहीतनामधेयेन नीलकण्ठेन राम-रुद्रेण च पण्डितेन व्याख्यानं व्यरचीति शास्त्राधीतीनां विदितचरमेव । अपि च श्री-रायनरसिंहेन पट्टाभिरामेण च 'दीपिकायाः' प्रकाशिकाख्या व्याख्या निरमीयत ।

इदञ्च संस्करणं तर्कसंग्रहस्य भूयसा परिश्रमेण सम्पाद्य प्राकाश्यमुपनीयते । यदि चाऽनेन कस्यचिदपि स्यादुपकारो लेशतोऽपि, क्लेशसाफल्यं मन्यमानो धन्यो भवेयम् ।

अत्रत्यो हिन्दीभाषानुवादश्चाऽस्मत्परममित्रेण हिन्दूविश्वविद्यालयीयेन संस्कृताध्यापकेन श्रीमता वटुकनाथशर्मसाहित्याचार्य एम. ए. महोदयेन तथा हिन्दीभाषाध्यापकेन श्रीमता केशवप्रसादमिश्रकाव्यतीर्थेन परिशोधित इति नितरामनुगृहीतोऽस्मि तेन तेन । अन्यथा वङ्गीयस्य मे हिन्दीभाषालेखप्रयास-साहसमुपरहासास्पदमेवाऽभविष्यत् ।

एकमात्रगुणवत्पुत्रवियोगकातरतरहृदयेन ग्रन्थमेन सम्पादयता मया बह्वयः त्रुटयः संघटिता इति विदितमस्त्येव चेतसि स्वीये । तथापि—

पदे पदे स्खलन्तं मां ग्रन्थस्यास्य प्रकाशने ।
क्षन्तुमर्हन्तु ते सन्तः 'क्षमासारा हि साधवः' ॥ इति

हिन्दूविश्वविद्यालये
१८५२ तमशकाब्दे
कोजागरपूर्णिमायाम्
७–१०–३०

सानुनयमावेदयति—
विदुषां विधेयः
**श्रीहरिहरशास्त्री**

# शुद्धिपत्रम्

(२) पादटीका २ पृष्ठे स्थापनीया ।

| पृ० | प० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ६ | २६ | जातिनिष्ठत्वमङ्गीकृत्य | जातित्वमङ्गीकृत्य |
| १४ | ९ | न्यायबधिनी | न्यायबोधिनी |
| १९ | १ | सवज्ञः | सर्वज्ञः |
| ३७ | २६ | एक | एव |
| ,, | २७ | संयोगो | संयोगौ |
| ४३ | १ | असाधारणं कारणं | असाधारणकारणं |
| ,, | ५ | असाधारणमिति | असाधारणकारणमिति |
| ,, | ,, | व्यापारवदसाधारणं | व्यापारवदसाधारण |
| ,, | ६ | असाधारणत्वञ्च | असाधारणकारणत्वञ्च |
| ६३ | ५ | व्यातिरेकमा० | व्यतिरेकमा० |
| ७८ | २२ | वदिकं | वैदिकं |
| ९६ | २८ | महाषणा | महर्षिणा |
| (१२) | २७ | संगयोगित्वम् | संयोगित्वम् |
| (२३) | २७ | कारणावच्छि० | कारणत्वच्छि० |

श्रीः

# तर्कसंग्रहः

## दीपिकया न्यायबोधिन्या ध्रुवपदाख्यविवृत्या च सहितः



निधाय हृदि विश्वेशं विधाय गुरुवन्दनम् ।
बालानां सुखबोधाय क्रियते तर्कसंग्रहः ॥१॥

दीपिका

विश्वेश्वरं साम्बमूर्तिं प्रणिपत्य गिरां गुरुम् ।
टीकां शिशुहितां कुर्वे तर्कसंग्रहदीपिकाम् ॥१॥

चिकीर्षितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थं शिष्टाचारानुमितश्रुतिबोधितकर्तव्यताकमिष्टदेवतानमस्कारलक्षणं मङ्गलं शिष्यशिक्षार्थं निबध्नंश्चिकीर्षितं ग्रन्थादौ प्रतिजानीते—निधायेति । ननु मङ्गलस्य समाप्तिसाधनत्वं नास्ति, मङ्गले कृतेऽपि कादम्बर्यादौ निर्विघ्नपरिसमाप्त्यदर्शनात्*,

न्यायबोधिनी

अखिलागमसञ्चारि श्रीकृष्णाख्यं परं महः ।
ध्यात्वा गोवर्धनसुधीस्तनुते न्यायबोधिनीम् ॥ १ ॥

चिकीर्षितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थमिष्टदेवतानमस्कारात्मकं मङ्गलं शिष्यशिक्षार्थं ग्रन्थादौ निबध्नाति—निधायेति ॥१॥

---

ध्रुवपदा

तातः श्रीमथुरानाथः प्रीणातु प्रणिपाततः ।
क्षीरोदार्णवजा साक्षान्माता च करुणाव्रता ॥ १ ॥
वागीशानसमानदीधितिकृतो न्यूनत्वमुद्भावयन्
न्याये यः प्रणिनाय विस्मयकरं ग्रन्थं स्वतन्त्रं पुनः ।
मायावादनिरासमारचयता येनेह लब्धं यश-
स्तं भक्त्येकवशैः स्मरामि शतशो राखालदासं गुरुम् ॥ २ ॥

---

* समाप्त्यदर्शनादिति पाठान्तरम् ।

मङ्गलाभावेऽपि किरणावल्यादौ समाप्तिदर्शनात् (१) अन्वयव्यतिरेकव्यभिचारादिति चेत्, न, कादम्बर्यादौ विघ्नबाहुल्यात्समाप्त्यभावः। किरणावल्यादौ तु ग्रन्थाद्बहिरेव मङ्गलं कृतमतो न व्यभिचारः।

ननु मङ्गलस्य कर्तव्यत्वे किं प्रमाणमिति चेत्, न, शिष्टाचारानुमितश्रुतेरेव प्रमाणत्वात्। 'समाप्तिकामो मङ्गलमाचरेत्' इति श्रुतेः। तथा हि—मङ्गलं वेदबोधितकर्तव्यताकमलौकिकाविगीतशिष्टाचारविषयत्वात्, दर्शादिवत्। भोजनादौ व्यभिचारवारणायालौकिकेति। रात्रिश्राद्धादौ व्यभिचारवारणायाविगीतेति। शिष्टपदं स्पष्टार्थम्। 'न कुर्यान्निष्फलं कर्म' ['न कुर्वीत वृथा चेष्टाम्' इति मनुः] इति जलताडनादेरपि निषिद्धत्वादिति। 'तर्क्यन्ते' प्रतिपाद्यन्त इति तर्का द्रव्यादिसप्तपदार्थास्तेषां संग्रहः संक्षेपेण स्वरूपकथनं क्रियत इत्यर्थः। कस्मै प्रयोजनायेत्यत आह—सुखबोधायेति। सुखेन अनायासेन बोधः पदार्थज्ञानं तस्मा इत्यर्थः। ननु बहुषु तर्कग्रन्थेषु सत्सु किमर्थमपूर्वग्रन्थः क्रियत इत्यत आह—बालानामिति। तेषामतिविस्तृतत्वाद्बालानां ततः सुखेन बोधो न भवतीत्यर्थमित्यर्थः। ग्रहणधारणपटुर्बालः। न तु स्तनन्धयः। किं कृत्वा क्रियत इत्यत आह—निधायेति। 'विश्वेशं' जगन्नियन्तारं शिवं हृदि 'निधाय' नितरां स्थापयित्वा। सर्वदा तद्ध्यानपरो भूत्वेत्यर्थः। 'गुरूणां' विद्यागुरूणां 'वन्दनं' नमस्कारं विधाय कृत्वेत्यर्थः।

**द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः सप्त पदार्थाः ॥१॥**

पदार्थान्विभजते—द्रव्येति (२)। पदस्यार्थः पदार्थ इति व्युत्पत्त्याऽभिधेयत्वं पदार्थसामान्यलक्षणमिति लभ्यते। नन्वत्र विभागादेव सप्तत्वे

---

पूर्वेषां मतमाकलय्य बहुषु ग्रन्थेषु चिन्ताशते-
साक्षादक्षपदावतारविदुषां ध्यात्वा गुरूणां गिरः।
अन्नम्भट्टनिबन्धने हरिहरेणेयं बुधानां मुदे
व्याख्या कापि विधीयते ध्रुवपदेत्याख्या मया सादरम् ॥२॥

(१) अथ किरणावल्यां "विद्यासन्ध्योदयोद्रेका" दित्यादिरूपस्य मङ्गलद्वयस्य जागरूकत्वेऽपि तदसमाप्तिदर्शनात् ग्रन्थोऽयं कथं सङ्गच्छत इति चेत्, अस्य तु रहस्यं जानाति दीपिकाकार एव। अत्र 'किरणावली'नामकः कश्चन नास्तिकग्रन्थो दीपिकाकृदभिप्रेत इति कश्चित्। तन्न सम्यक्, "किरणावल्यादौ तु ग्रन्थाद्बहिरेव मङ्गलं कृत"मित्यग्रिमग्रन्थविरोधात्।

लब्धे सप्तग्रहणं किमर्थमिति चेत्, न, अधिकसंख्याव्यवच्छेदार्थत्वात् † ।

नन्वतिरिक्तः पदार्थः प्रमितो न वा । नाद्यः, प्रमितस्य निषेधायोगात् । नान्त्यः, प्रतियोगिप्रमितिं विना निषेधानुपपत्तेरिति चेत्, न, पदार्थत्वं द्रव्यादिसप्तान्यतमत्वव्याप्यमिति व्यवच्छेदार्थत्वात् । ननु सप्तान्यतमत्वं सप्तभिन्नभिन्नत्वम्, एवं च सप्तभिन्नस्याप्रसिद्धत्वात्सप्तान्यतमत्वं कथमिति चेत्, न, द्रव्यादिसप्तान्यतमत्वं द्रव्यादिभेदसप्तकाभाववत्त्वमिति तदर्थत्वात् । एवमग्रेऽपि द्रष्टव्यम् ।

## न्यायबोधिनी

अथ पदार्थान्विभजते—द्रव्येति । तत्र सप्तग्रहणं पदार्थत्वं द्रव्यादिसप्तान्यतमत्वव्याप्यमिति व्याप्तिलाभाय । ननु शक्तिपदार्थस्याष्टमस्य सत्त्वात्कथं सप्तैवेति । तथा हि—मण्यादिसंयुक्तेन्धनादौ सत्यपि वह्निसंयोगे दाहो न जायते, तच्छून्ये तु जायते, अतो मणिसमवधाने शक्तिर्नश्यति मण्यभावदशायां दाहानुकूला शक्तिरुत्पद्यत इति कल्प्यते । तस्माच्छक्तिरतिरिक्तः पदार्थ इति चेत्, मणेः प्रतिबन्धकत्वेन मण्यभावस्य कारणत्वेनैव निर्वाहे मणिसमवधानासमवधानाभ्यामनन्तशक्तितद्ध्वंसतत्प्रागभावकल्पनाया अन्याय्यत्वात् । तस्मात्सप्तैव पदार्था इति सिद्धम् ॥ १ ॥

---

(२) ननु सर्वेषां दर्शनानां मोक्षरूपप्रयोजनप्रतिपादकत्वं दृश्यते, अत्र तु किमर्थं पदार्थनिरूपणमित्याशङ्कायां "तर्कामृते" जगदीशभट्टाचार्यैरुक्तम्—"अथ श्रुतिः श्रूयते—आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य." ( बृहदारण्यकोपनिषद्, ४।५।६ ) इति । अस्यार्थः—मुमुक्षुणा आत्मा द्रष्टव्यः, मुमुक्षोः आत्मदर्शनम् इष्टसाधनमिति यावत् । आत्मदर्शनोपायः क इत्यत्राह—श्रोतव्य इत्यादि । तेन आर्थक्रमेण शाब्दक्रमस्त्यक्तो भवति । "अग्निहोत्रं जुहोति यवागूं पचती"त्यादिवत् । तथा च श्रवणमनननिदिध्यासनानि तत्त्वज्ञानजनकानि इत्युक्तं भवति । अत्र श्रुतितः कृतात्मश्रवणस्य मननेऽधिकारः । मननं चात्मन इतरभिन्नत्वेनानुमानम् । तच्च भेदप्रतियोगीतरज्ञानसाध्यम् । तथा चेतरदेव कियदित्येतदर्थं पदार्थनिरूपणम् ।"

---

† न्यूनाधिकस० ।

तत्र द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव॥२॥

द्रव्यं विभजते—तत्रेति। 'तत्र' द्रव्यादिमध्ये द्रव्याणि नवैवेत्यन्वयः। कानि तानीत्यत आह—पृथिवीत्यादि। ननु तमसो दशमद्रव्यस्य विद्यमानत्वात्कथं नवैव द्रव्याणि। तथा हि—'तमः खलु चलं नीलं परापरविभागवत्। प्रसिद्धद्रव्यवैधर्म्यान्नवभ्यो भेत्तुमर्हति॥' नीलं तमश्चलतीत्यबाधितप्रतीतिबलान्नीलरूपाधारतया क्रियाधारतया च द्रव्यत्वं तावत्सिद्धम्। तत्र तमसो नाकाशादिपञ्चकेऽन्तर्भावो रूपवत्त्वात्। अत एव न वायौ स्पर्शाभावात्, सदागतिमत्त्वाभावाच्च। नापि तेजसि भास्वररूपाभावादुष्णस्पर्शाभावाच्च। नापि जले शीतस्पर्शाभावान्नीलरूपाश्रयत्वाच्च। नापि पृथिव्यां गन्धवत्त्वाभावात्स्पर्शरहितत्वाच्च। तस्मात्तमो दशमद्रव्यमिति चेन्न, तमसस्तेजोऽभावरूपत्वात् (३)। तथा हि तमो हि न रूपिद्रव्यं आलोकाऽसहकृतचक्षुर्ग्राह्यत्वात्, आलोकाभाववत्। रूपिद्रव्यचाक्षुषप्रमा-

## न्यायबोधिनी

द्रव्याणि विभजते—पृथिवीति। नन्वन्धकारस्य दशमद्रव्यस्य सत्त्वात्कथं नवैवेति। तथा हि—नीलं तमश्चलतीति प्रतीतेर्नीलरूपाश्रयत्वेन क्रियाश्रयत्वेन च तमसो द्रव्यत्वं सिद्धम्। न च क्लृप्तद्रव्येष्वन्तर्भावात्कुतो दशमद्रव्यत्वमिति वाच्यम्। तमसो रूपवत्त्वात् आकाशादिपञ्चकस्य वायोश्च नीरूपत्वान्न तेष्वन्तर्भावः। तमसो निर्गन्ध-

---

(३) ननु तेजःसामान्याभावस्तमःपदार्थं उत तद्विशेषाभावः? नाद्यः, गाढान्धकारेऽपि देशे तैजसपरमाण्वादिसत्त्वेन तमःप्रतीत्यनुपपत्तेः। न द्वितीयः, रजन्यादौ स्फीतदीपालोकसत्त्वेऽपि सौरालोकाभावात् तमःप्रतीत्यापत्तेः। इति चेन्न, 'मुक्तावलीप्रकाश'कारादिभिः प्रकृष्टमहत्त्वोद्भूतानभिभूतरूपवत्तेजस्त्वावच्छिन्नाभावस्यैव तमःपदार्थत्वेन निरूपितत्वात्।

वस्तुतस्तु महाप्रभात्वावच्छिन्नाभाव एव तमःपदार्थः। अनुद्भूतत्वाभावात्मकस्योद्भूतत्वादेरतीन्द्रियतया तद्घटितधर्मावच्छिन्नाभावस्याऽयोग्यत्वेन प्रत्यक्षायोगात्।

ननु यदि प्रभाभाव एव तमस्तदा प्रतियोगिस्मरणमन्तरेण तत्प्रतीतिर्न स्यात्? इति चेन्न, प्रतियोगिस्मरणमन्तरेणापि दोषात् तमःप्रतीतेः। दोषश्चात्र विषय एव।

यामालोकस्य कारणत्वात्। तस्मात्प्रौढप्रकाशकतेजःसामान्याभावस्तमः। तत्र नीलं तमश्चलतीति प्रत्ययो भ्रमः। अतो नव द्रव्याणीति सिद्धम्।

द्रव्यत्वजातिमत्त्वं गुणवत्त्वं वा द्रव्यसामान्यलक्षणम्। लक्ष्यैकदेशावृत्तित्वमव्याप्तिः। यथा गोः कपिलत्वम्। अलक्ष्यवृत्तित्वमतिव्याप्तिः। यथा गोः शृङ्गित्वम्। लक्ष्यमात्रावर्तनमसम्भवः। यथा गोरेकशफत्वम्। एतद्दूषणत्रयरहितो धर्मो लक्षणम्। यथा गोः सास्नादिमत्त्वम्। स एवासाधारणधर्म इत्युच्यते। लक्ष्यतावच्छेदकसमनियतत्वमसाधारणत्वम्। व्यावर्तकस्यैव लक्षणत्वे व्यावृत्तावभिधेयत्वादौ चातिव्याप्तिवारणाय तद्भिन्नत्वं धर्मविशेषणं देयम्। व्यवहारस्यापि लक्षणप्रयोजनत्वे तु न देयम्। व्यावृत्तेरपि व्यवहारसाधनत्वात्। ननु गुणवत्त्वं न द्रव्यसामान्यलक्षणम्। आद्यक्षणे उत्पन्नविनष्टद्रव्ये चाव्याप्तेरिति चेन्न, गुणसमानाधिकरणसत्ताभिन्नजातिमत्त्वस्य विवक्षितत्वात्। नन्वेवमप्येकं रूपं रसात्पृथगिति व्यवहाराद्रूपादावतिव्याप्तिरिति चेन्न, एकार्थसमवायादेव तादृशव्यवहारोपपत्तौ गुणे गुणानङ्गीकारात् (४)।

## न्यायबोधिनी

**स्त्वात् पृथिव्या गन्धवत्त्वाच्च पृथिव्यामन्तर्भावः। तमसो निःस्पर्शत्वात् जलतेजसोः शीतोष्णस्पर्शवत्त्वाच्च तयोरन्तर्भावः। तस्मात्तमसो दशमद्रव्यत्वं सिद्धमिति चेत्, न, तमसस्तेजोऽभावरूपत्वेनैवोपपत्तावतिरिक्ततत्कल्पनायां मानाभावात्। न च विनिगमनाविरहात्तेज एव तमोऽभावस्वरूपमस्त्विति वाच्यम्, तेजसोऽभावस्वरूपत्वे सर्वानुभूतोष्णस्पर्शाश्रयद्रव्यान्तरकल्पने गौरवात्। तस्मादुष्णस्पर्शगुणाश्रयतया तेजसो द्रव्यत्वं सिद्धम्। तमसि नीलत्वादिप्रतीतिस्तु भ्रान्तिरेव। एवं कर्मवत्ताप्रतीतिरपि दीपापसरणक्रियाया एव तत्र भानात्॥ २॥**

---

(४) **न्यायमञ्जरीकारैस्तु** शब्दस्य गुणत्वसाधनावसरे—"कथं तर्ह्यस्य महत्त्वादियोगो निर्गुणा गुणा इति काणादाः। अस्ति हि प्रतीतिर्महान् शब्द इति। समानजातीयगुणाभिप्रायं तत् कणादवचनमिति न दोषः। तस्मादाकाशगुणः शब्दः।" इति ग्रन्थेन गुणेषु समानजातीयगुणसत्त्वमेव प्रतिषिद्धम्। "समानजातीयगुणसद्भावस्तावदनवस्थाप्रसङ्गा" दित्यादिसन्दर्भेण तन्मतमपाकृत्य

**रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहशब्दबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराश्चतुर्विंशतिगुणाः ॥३॥**

गुणं विभजते—रूपेति। द्रव्यकर्मभिन्नत्वे सति सामान्यवान् गुणः। गुणत्वजातिमान्वा। लघुत्वमृदुत्वकठिनत्वादीनां विद्यमानत्वात् कथं चतुर्विंशतिगुणा इति चेत्, न, लघुत्वस्य गुरुत्वाभावरूपत्वात् मृदुत्वकठिनत्वयोरवयवसंयोगविशेषरूपत्वात् (५)।

**उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानि पञ्च कर्माणि ॥४॥**

कर्म विभजते—उत्क्षेपणेति। संयोगभिन्नत्वे सति संयोगासमवायिकारणं कर्म कर्मत्वजातिमद् वा। ननु भ्रमणादेरप्यतिरिक्तस्य कर्मणः सत्त्वात् पञ्चेत्यनुपपन्नमिति चेत्, न, भ्रमणादीनामपि गमनेऽन्तर्भावात् न पञ्चत्वविरोधः।

**परमपरं चेति द्विविधं सामान्यम् ॥५॥**

सामान्यं विभजते—परमिति। परमधिकदेशवृत्ति। अपरं न्यूनदेशवृत्ति। सामान्यादिचतुष्टये जातिर्नास्ति।

---

"चतुर्विंशतिर्गुणा महांश्छब्द इत्यादयो व्यवहारास्तदेकार्थसमवायादिना साधर्म्येण गौणाः समर्थनीयाः।" इति **किरणावलीकारैरुक्तम्**।

**गुरुचरणास्तु** "एकं द्रव्यमितिवदेको गुण एका क्रिया एका जातिरभावोऽयमेक इत्यादिप्रतीतेरपि स्वारसिकतया गुणादिष्वपि संख्यावत्त्वं निराबाधमेव। ...... न च गुणमात्रस्यैव द्रव्यमात्रावस्थायित्वनियमात् गुणात्मिकायाः संख्यायाः सम्भवो न हि गुणादौ, तत्र तत्र एकत्वद्वित्वादिकन्तु तत्तद्व्यक्तित्वधीविशेषविषयत्वरूपमेवाऽगत्याऽङ्गीकार्यमिति वाच्यम्, तथा सत्येकोऽयं गुण एकमिदं द्रव्यमित्यादिप्रतीत्योरेकत्वाद्यंशे कियतोऽपि वैषम्यस्याऽननुभवेन संख्याया गुणात्मकत्वे प्रमाणस्यैव दुर्लभत्वापत्तेः।" इति प्राहुः। विचारविस्तरस्तु तेषां **तत्त्वसारे** द्रष्टव्यः।

(५) **मुक्तावलीकृतस्तु** मृदुत्वस्य कठिनत्वस्य च स्पर्शगतजातिनिष्ठत्वमङ्गीकृत्य 'कठिनत्वादिकन्तु न संयोगनिष्ठो जातिविशेषः, चक्षुर्ग्राह्यतापत्ते'रित्याहुः। कठिनत्वादेः संयोगनिष्ठत्वे चक्षुषा तत्प्रत्यक्षं दुर्वारं स्यादिति भावः। कठिनः संयोग इति प्रतीतिस्तु कठिनस्पर्शवद्द्रव्यप्रतियोगिकत्वावगाहनेनैवोपपद्यते।

**नित्यद्रव्यवृत्तयो विशेषास्त्वनन्ता एव ॥६॥**

विशेषं विभजते—नित्येति । पृथिव्यादिचतुष्टयस्य परमाणवः आकाशादिपञ्चकं च नित्यद्रव्याणि ।

**समवायस्त्वेक एव ॥७॥**

समवायस्य भेदो नास्तीत्याह—समवायस्त्विति ।

**अभावश्चतुर्विधः । प्रागभावः प्रध्वंसाभावोऽत्यन्ताभावोऽन्योन्याभावश्चेति ॥८॥**

अभावं विभजते—अभाव इति ।

**तत्र गन्धवती पृथिवी । सा द्विविधा नित्यानित्या च ।**

**नित्या परमाणुरूपा अनित्या कार्यरूपा ।**

तत्रोद्देशक्रमानुसारेण प्रथमं पृथिव्याः लक्षणमाह—गन्धवतीति । नाम्ना पदार्थसङ्कीर्तनमुद्देशः । उद्देशक्रमे च सर्वत्रेच्छैव नियामिका । ननु सुरभ्यसुरभ्यवयवारब्धे द्रव्ये परस्परविरोधेन गन्धानुत्पादादव्याप्तिः । न च तत्र गन्धप्रतीत्यनुपपत्तिरिति वाच्यम् , अवयवगन्धस्यैव तत्र भानसम्भवेन चित्रगन्धानङ्गीकारात् (६) । किञ्चोत्पन्नविनष्टघटादावव्याप्तिरिति चेन्न , गन्धसमानाधिकरणद्रव्यत्वापरजातिमत्त्वस्य विवक्षितत्वात् । ननु जलादावपि गन्धप्रतीतेरतिव्याप्तिरिति चेन्न, अन्वयव्यतिरेकाभ्यां पृथिवीगन्धस्यैव तत्र भानाङ्गीकारात् । ननु तथापि कालस्य सर्वाधारतया सर्वेषां लक्षणानां तत्रातिव्याप्तिरिति चेन्न , सर्वाधारताप्रयोजकसम्बन्धभिन्नसम्बन्धेन लक्षणस्याभिमतत्वात् । पृथिवीं विभजते—सा द्विविधेति । नित्यत्वं ध्वंसाप्रतियोगित्वं । ध्वंसप्रतियोगित्वमनित्यत्वम् ।

## न्यायबोधिनी

गन्धवतीति । गन्धवत्त्वं पृथिव्या लक्षणम् । लक्ष्या पृथिवी । पृथिवीत्वं लक्ष्यतावच्छेदकम् । पृथिवीत्वावच्छिन्ना लक्ष्यता । यद्धर्मावच्छिन्नं लक्ष्यं स धर्मो लक्ष्यतावच्छेदकः । यो धर्मो यस्या-

(६) "गन्धो द्विविध सुरभिरसुरभिश्चे"ति भाष्यव्याख्यानावसरे 'असुरभिः सुरभ्यन्यगन्धः । तेन दुर्गन्धभिन्नस्य चित्रस्य सत्त्वेऽपि न द्वैविध्यव्याघातः ।' इति सूक्तौ जगदीशः । अत एव दोषान्तरमाह— किञ्चेति ।

पुनस्त्रिविधा—शरीरेन्द्रियविषयभेदात् । शरीरमस्मदादीनाम् । इन्द्रियं गन्धग्राहकं घ्राणं नासाग्रवर्ति । विषयो मृत्पाषाणादिः ॥९॥

प्रकारान्तरेण विभजते—पुनरिति । आत्मनो भोगायतनं शरीरम् (७) । यदवच्छिन्नात्मनि भोगो जायते तद्भोगायतनम् । सुखदुःखा-

न्यायबोधिनी

मवच्छेदकः सा तद्धर्मावच्छिन्ना । तथा च लक्ष्यतावच्छेदकं पृथिवीत्वं चेल्लक्ष्यता पृथिवीत्वावच्छिन्ना । गन्धसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वं पृथिव्या लक्षणम् । एवं शीतस्पर्शवत्त्वादिलक्षणेषु जलादीनां लक्ष्यता जलत्वादीनां लक्ष्यतावच्छेदकत्वं च बोध्यम् ॥ ६ ॥

(७) "तत्र शरीरं द्विविधं योनिजमयोनिजं च—"(वैशेषिकं सूत्रम्, ४।२।५) योनिजं च शुक्रशोणितयोः परस्परसम्बन्धजन्यं, न तु योनिद्वारा निर्गतम्, तेन कदाचित् स्वेदजशरीरस्यापि योनिद्वारा निर्गमसम्भवात् न तत्रातिव्याप्तिः ।

योनिजं जरायुजमण्डजं चेति द्विविधम् । जरायुजमस्मदादीनामण्डजं सर्पादीनाम् । अयोनिजं त्रिविधम्—शुक्रशोणितसन्निपातानपेक्षादृष्टविशेषोपगृहीतपृथ्वीजन्यम्, स्वेदजमुद्भिज्जं च । आद्यं नारदादीनाम्, द्वितीयं कृम्यादीनाम्, तृतीयं च पृथिवीं भित्त्वा जायमानानां वृक्षादीनाम् ।

इदमत्रावधेयम्—वृक्षादीनां सजीवत्वेन प्रतिपादनं न तावदाधुनिकपाश्चात्यविज्ञानविदां नवाविष्कारः। सहस्रवर्षपूर्वमपि न्यायाचार्यैरुदयनैस्तेषां शरीरभेदतया युक्त्या प्रतिपादितत्वात् । उक्तं च तैः प्रशस्तपादभाष्यव्याख्यानावसरे—"यद्यपि चोद्भिदोऽपि वृक्षादयः शरीरभेदतया अत्रैव व्याख्यातुमुचिताः, तथाप्यतिमन्दान्तःसंज्ञतया .....विषयतां विवक्षन् तेष्वेवान्तर्भाव्य व्याख्यास्यन्ते ।"

"वृक्षादयः प्रतिनियतभोक्त्रधिष्ठिताः, जीवनमरणस्वप्नजागरणरोगभेषजप्रयोगसजातीयानुबन्धानुकूलोपगमप्रतिकूलापगमादिभ्यः, प्रसिद्धशरीरवत् । न चैते सन्दिग्धासिद्धाः, आध्यात्मिकवायुसम्बन्धात् । सोऽपि मूले निषिक्तानामपां दोहदस्य च पार्थिवस्य धातोरभ्यादानात् । तदपि वृद्धिभग्नक्षतसंरोहणाभ्यामिति ।"—( किरणावली, ५७-५८ पृ० )

एतन्मतमनुसृत्यैव मुक्तावलीकारैरभिहितम्—"न च वृक्षादेः शरीरत्वे किं मानम् ? इति वाच्यम्, आध्यात्मिकवायुसम्बन्धस्य प्रमाणत्वात् । तत्रैव किं मानमिति चेत्, भग्नक्षतसंरोहणादिना तदुन्नयनात् ।" इति ।

न्यतरसाक्षात्कारो भोगः। शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञान-कारणमनःसंयोगाश्रयत्वम् इन्द्रियत्वम्। शरीरेन्द्रियभिन्नो विषयः। एवं च गन्धवच्छरीरं पार्थिवशरीरम्, गन्धवदिन्द्रियं पार्थिवेन्द्रियम्,

---

वृक्षादीनां जीवाधिष्ठितत्वे न केवलं युक्तिरेव, परन्त्वागमसाम्राज्यस्यापि तत्र प्रमाणत्वमिति "आगमश्चात्रार्थे बहुतरोऽनुसन्धेय" इति **किरणावली**सन्दर्भ-व्याख्यानावसरे वर्द्धमानोपाध्यायैः—

"नर्म्मदातीरसञ्जाताः सरलार्जुनपादपाः।
नर्म्मदातोयसंस्पर्शात् तेऽपि यान्ति परां गतिम्॥"
"श्मशाने जायते वृक्षः कङ्कगृध्रोपसेवितः।"

इति वचनद्वयं प्रमाणत्वेनोपन्यस्तम्। "**मुक्तावलीप्रकाशे**" द्वितीयवचनस्य प्रथमार्द्धमप्येवं दृश्यते—

"गुरुं त्वंकृत्य हुंकृत्य विप्रं निर्जित्य वादतः।"

सन्ति च **छान्दोग्योपनिषदि मनुस्मृतौ** च वृक्षाणां सजीवत्वप्रतिपाद-कानि परमवाक्यानि। तथा च—

"अस्य सोम्य महतो वृक्षस्य यो मूलेऽभ्याहन्याज्जीवन् स्रवेद् यो मध्येऽभ्याहन्याज्जीवन् स्रवेद् योऽग्रेऽभ्याहन्याज्जीवन् स्रवेत् स एष जीवेनात्मनानुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति।" इति।—(६।११।१)

"कीटाश्चाहिपतङ्गाश्च पशवश्च वयांसि च।
स्थावराणि च भूतानि दिवं यान्ति तपोबलात्॥"—
(मनुः, ११।२४१)

"शरीरजैः कर्म्मदोषैर्याति स्थावरतां नरः॥" इति च।
(मनुः, १२।९)

'श्रीदुर्गोत्सवपद्धति' धृतं **कालिकापुराणीयं**

"शाखाच्छेदोद्भवं दुःखं न च कार्य्यं त्वया प्रभो।"—इति बिल्ववृक्षं प्रति वचनं च वृक्षस्य दुःखादिमत्त्वे प्रमाणम्।

सत्स्वपि बहुषु शास्त्रवाक्येषु वृक्षाणां सात्मकत्वस्य प्रतिपादकेषु न्याय-वैशेषिकदर्शनयोरुदयनाचार्य्यात् प्राक् तेषां सजीवत्वव्यवस्थापनं नासीत्, प्रत्युत तद्विपरीतलेखनमेव सर्वत्र। तथा च **प्रशस्तपादभाष्ये** योनिजायोनिजशरीर-निरूपणावसरे वृक्षादयो न व्याख्याता अपि तु प्रतिपादितास्ते विषयान्तर्भावेणैव। [ विषयस्तु द्व्यणुकादिक्रमेणारब्धस्त्रिविधो मृत्पाषाणस्थावरलक्षणः। स्थावरास्तृणौ-षधिवृक्षलतावतानवनस्पतयः। [ २८ पृ० ।]

गन्धवान् विषयः पार्थिवविषयः इति तच्चलक्षणं बोध्यम् । पार्थिवं शरीरं दर्शयति—शरीरमिति । इन्द्रियं दर्शयति—इन्द्रियमिति । गन्धग्राहकमिति प्रयोजनकथनम् । घ्राणमिति संज्ञा । नासाग्रेत्याश्रयोक्तिः । एवमुत्तरत्र ज्ञेयम् । पार्थिवविषय दर्शयति—मृत्पाषाणेति ।

---

वाचस्पतिमिश्र-जयन्तभट्ट-श्रीधराचार्यैरपि तत्तद्ग्रन्थसन्दर्भेषु वृक्षादीनां शरीरत्वं नाङ्गीकृतम् । तथा च तेषां ग्रन्थाः—

"चेष्टा व्यापारः । स चातिव्यापकतयाऽव्यापकतया च न लक्षणम्, वृक्षादिषु भावादभावाच्च पाषाणमध्यवर्त्तिमण्डूकादिशरीर इति भावः ।...प्रयुक्तस्योत्पादितस्य न व्यापारमात्रं चेष्टाऽभिमता, अपि तु विशिष्टो व्यापारः । स च न वृक्षादिष्वस्तीति नातिव्यापकता । "—( तात्पर्य्यटीका, १४२ पृ० )

"ननु चेष्टा क्रिया, क्रियावत्त्वे च सत्यपि न वृक्षादीनां शरीरत्वमित्यतिव्यापकं लक्षणम्, विशिष्टचेष्टाश्रयत्वस्य विशिष्टप्रमेयलक्षणप्रक्रमतोऽवसीयमानत्वात् ।"

( न्यायमञ्जरी, ४७४ पृ० )

"वृक्षादिगतेन वृद्ध्यादिना व्यभिचार इति चेन्न तस्यापीश्वरकृतत्वात् । न तु वृक्षादयः सात्मकाः वृद्ध्याद्युत्पादनसमर्थस्य विशिष्टात्मसम्बन्धस्याभावात् ।"

( न्यायकन्दली ८३ पृ० )

आर्हतास्तु वृक्षाणां सात्मकत्वं न खलु नाङ्गीचक्रुः । अतएव सूत्रितमुमास्वामिना—

"पृथिव्यप्तेजोवायुवनस्पतयः । -"(तत्त्वार्थसूत्रम्, २।१३) तेषामयमाशयः—जीवो द्विविधः, त्रसस्थावरभेदात् । "द्वीन्द्रियादयस्त्रसाः" स्थावरास्तावदेकेन्द्रियाः । वृक्षस्तु स्थावरान्तर्भूतः, अत एव तस्य स्पर्शग्राहकमेकमेवेन्द्रियमिति ।

परन्त्वसौ सिद्धान्तो न सौगतमतसिद्धः । यतः सर्वासां त्वचामपहरणे वृक्षाणां सम्पद्यते मरणमिति जैननयमनादृत्य **न्यायबिन्दु**कारैर्धर्मकीर्त्तिभिरुद्घोषितम्—

"चेतनास्तरव इति साध्ये सर्वत्वगपहरणे मरणं प्रतिवाद्यसिद्धं विज्ञानेन्द्रियायुर्निरोधलक्षणस्य मरणस्यानेनाभ्युपगमात् तस्य च तरुष्वसम्भवादिति ।"

**सुश्रुत**मते च वृक्षादय स्थावरान्तर्भूताः, उद्भिज्जाश्च इन्द्रगोपमण्डूकप्रभृतयः । तदुक्तं—"तासां स्थावराश्चतुर्विधाः । वनस्पतयो वृक्षा वीरुध ओषधय इति ।......'जङ्गमास्त्वपि चतुर्विधा जरायुजाण्डजस्वेदजोद्भिज्जाः ।.... इन्द्रगोपमण्डूकप्रभृतय उद्भिज्जाः ।"—( सूत्रस्थानम्, १ अः, २२-२३ । )

**चरका**स्तु—"... ·औद्भिदं तु चतुर्विधम् ।

वनस्पतिस्तथा वीरुद् वानस्पत्यस्तथौषधिः ॥ " —(सूत्रस्थानम्, १।७०) इति प्राहुः ।

शीतस्पर्शवत्य आपः । ता द्विविधाः, नित्या अनित्याश्च । नित्याः परमाणुरूपाः । अनित्याः कार्यरूपाः । पुनस्त्रिविधाः— शरीरेन्द्रियविषयभेदात् । शरीरं वरुणलोके । इन्द्रियं रसग्राहकं रसनं जिह्वाग्रवर्ति । विषयः सरित्समुद्रादिः ॥१०॥

अपां लक्षणमाह—शीतेति (८) । उत्पन्नविनष्टे जलेऽव्याप्तिवारणाय शीतस्पर्शसमानाधिकरणद्रव्यत्वापरजातिमत्त्वे तात्पर्यम् । 'शीतं शिलातलम्' इत्यादौ जलसम्बन्धादेव शीतस्पर्शभानमिति नातिव्याप्तिः । अन्यत्सर्वं पूर्वरीत्या व्याख्येयम् ।

---

(८) पाश्चात्त्यवैज्ञानिकास्तु-जलं न पदार्थान्तरम्, वैद्युतप्रवाहविश्लिष्टेष्वप्सु परस्परविलक्षणगुणविशिष्टयोरक्सिजनहाईड्रोजननामकयो पवनयोरेव द्वयोरुपलम्भात् । सर्वेष्वेव सलिलेषु भागद्वयं हाईड्रोजनस्यैकश्च भागः समस्त्यक्सिजनस्येति । रिक्तौ द्वावप्येतौ पदार्थौ वर्णतो रसतश्च । विद्यते खलु दहनप्रातिकूल्यं हाईड्रोजननामके वायुविशेषे तदानुकूल्यं चाक्सिजनाभिधाने तत्रैव । अनयोर्यथानिर्देशं सम्मेलनमेव जलमित्याकारकप्रतीतिविषयपदार्थोत्पादननिदानमिति वदन्ति ।

तन्नास्माकं मनोरमम्, यतस्तदङ्गीकृतमक्सिजनहाईड्रोजनाभिधानवस्तुद्वयं न खलु जलावयवाद् भिद्यते प्रमाणापरिचितत्वात् । एवञ्च प्रकृष्टस्नेहविशिष्टैरतीन्द्रियजलावयवैरपकृष्टस्नेहविशिष्टैश्च तैः सम्भूय स्थूलजलमुत्पाद्यते, द्व्यणुकादिक्रमेण परमाणूनां नियमतः संयोगेनैवावयविनां जायमानत्वात् । अत एव शतशो यतमानैरपि कैश्चिन्न शक्यते जलमुत्पादयितुं समानभागैरक्सिजन-हाईड्रोजनपदप्रतिपाद्यैः । यश्च परैरक्सिजने दहनानुकूलो हाईड्रोजने च दहनप्रतिकूलो गुणः स्वीक्रियते, स एवास्माकं स्नेहाभिधेयः । प्रकृष्टस्नेहे दहनानुकूलत्वमपकृष्टस्नेहे च दहनप्रातिकूल्यं वैशेषिकसिद्धान्तसिद्धम् । तथा च चोक्तं—विश्वनाथैः;

"तैलान्तरे तत्प्रकर्षाद् दहनस्यानुकूलता ।"

"......तैले उपलभ्यमानः स्नेहोऽपि जलीय एव, तस्य प्रकृष्टत्वादग्नेरानुकूल्यम् । अपकृष्टस्नेहं हि जलं वह्निं नाशयतीति भावः ।" अत एव प्रकृष्टस्नेहशालिजलपरमाणुरेव परेषामक्सिजनसंज्ञयाऽभिधीयमान इति न तत्र नवाविष्कारपाण्डित्यप्रख्यापनं युक्तं पाश्चात्त्यानाम् । न केवलं पाश्चात्त्यानामस्मद्देशीयानामपि केषाञ्चित् तद्भावदीक्षितानां प्राचामाचार्य्याणां भ्रमानुसन्धित्सैव मतमिवालम्बनमहो कालमाहात्म्यम् ! !

उष्णस्पर्शवत्तेजः । तद्विविधम् नित्यमनित्यं च । नित्यं परमाणुरूपम् । अनित्यं कार्यरूपम् । पुनस्त्रिविधम्, शरीरेन्द्रियविषयभेदात् । शरीरमादित्यलोके । इन्द्रियं रूपग्राहकं चक्षुः-कृष्णताराग्रवर्ति । विषयश्चतुर्विधः—भौमदिव्योदर्याकरजभेदात् । भौमं वह्न्यादिकम् । अविन्धनं दिव्यं विद्युदादि । भुक्तस्य परिणामहेतुरुदर्यम् । आकरजं सुवर्णादि ॥११॥

तेजसो लक्षणमाह—उष्णस्पर्शवदिति (९)। 'उष्णं जलम्' इति प्रतीतेस्तेजःसंबन्धानुविधायित्वात् नातिव्याप्तिः । विषयं विभजते—भौमेति । ननु 'सुवर्णं पार्थिवम् पीतत्वाद्गुरुत्वात् हरिद्रावत्' इति चेत्, न, अत्यन्तानलसंयोगे सति घृतादौ द्रवत्वनाशदर्शनेन, जलमध्यस्थघृते द्रवत्वनाशादर्शनेन, असति प्रतिबन्धके पार्थिवद्रवत्वनाशाग्निसंयोगयोः कार्यकारणभावावधारणात् । सुवर्णस्य अत्यन्तानलसंयोगे सत्यनुच्छिद्यमानद्रवत्वाधिकरणत्वेन पार्थिवत्वानुपपत्तेः । तस्मात् पीतद्रव्यद्रवत्वनाशप्रतिबन्धकतया द्रवद्रव्यान्तरसिद्धौ नैमित्तिकद्रवत्वाधिकरणतया जल-

चन्द्रकान्तीयवैशेषिकभाष्यकृतस्तु—"तत्रापां पृथग्वचनं न कर्त्तव्यम् । कस्मात्? वायुसन्निपातात् तदुत्पत्तेः । विशिष्टयोर्वाय्वोः सन्निपातात् खल्वाप उत्पद्यन्ते इति । कृत्रिमोत्पत्तेस्तात्त्विकप्रतिषेधानुपपत्तेरप्रतिषेधः वाय्वोः सन्निपातात् खल्वापः कृत्रिमा उत्पद्यन्ते । ..... ययोर्वाय्वोः सन्निपातादाप उत्पद्यन्ते, तत्रापि वायौ सूक्ष्माणामपां सद्भावोऽस्ति । प्रक्रियाविशेषात्तु तासामभिव्यक्तिरिति ।" इत्याहुः ।

(९) केचित्तु पाश्चात्यास्तेजो न पदार्थान्तरं किन्तु परमाणूनां स्पन्दनमेवोष्णस्पर्शकारणमिति मन्यन्ते । तन्न समीचीनम्, तेजसो गतिविशेषत्वाभ्युपगमे तत्स्पार्शनप्रत्यक्षानुपपत्तेः । प्रत्यक्षं प्रति महत्त्वस्य कारणत्वस्वीकारावश्यकतया परमाणुनिष्ठकम्पनविशेषात्मकतापपदार्थानां कथमपि न सम्भवत्युपलब्धिः ।

सौरकिरणस्य सूर्यपरमाणुकम्पनात्मकत्वे तस्य त्वगिन्द्रियेण प्रत्यक्षानुपपत्तिश्च स्पन्दनस्य त्वाचप्रत्यक्षे तदधिकरणेन्द्रियसंयोगावश्यकत्वात् । अपि च तापस्य कम्पनात्मकत्वस्वीकारे निरन्तरवातवृष्टिभीषणायाममातमस्विन्यां धूलीपटलादिसकलपदार्थस्य दोधूयमानत्वेऽपि आलोकस्योष्णस्पर्शस्य च कथं नोपलब्धिः?

त्वानुपपत्तेः रूपवत्तया वाय्वादिष्वनन्तर्भावात् तैजसत्वसिद्धिः। तस्योष्णस्पर्शभास्वररूपयोरुपष्टम्भकपार्थिवरूपस्पर्शाभ्यां प्रतिबन्धात् अनुपलब्धिः। तस्मात् सुवर्णं तैजसमिति सिद्धम्।

**रूपरहितस्पर्शवान् वायुः। स द्विविधः—नित्योऽनित्यश्च। नित्यः परमाणुरूपः। अनित्यः कार्यरूपः। पुनस्त्रिविधः—शरीरेन्द्रियविषयभेदात्। शरीरं वायुलोके। इन्द्रियं स्पर्शग्राहकं त्वक् सर्वशरीरवर्ति। विषयो वृक्षादिकम्पनहेतुः। शरीरान्तःसञ्चारी वायुः प्राणः। स चैकोऽप्युपाधिभेदात् प्राणापानादिसंज्ञां लभते ॥१२॥**

वायुं निरूपयति—रूपरहितेति। आकाशादावतिव्याप्तिवारणाय स्पर्शवानिति। पृथिव्यादावतिव्याप्तिवारणाय रूपरहितेति। ननु प्राणस्य कुत्रान्तर्भाव इत्यत आह—शरीरेति। स चेति। एक एव प्राणः स्थानभेदात् प्राणापानादिशब्दैर्व्यवह्रियत इत्यर्थः। स्पर्शानुमेयो वायुः (१०)। तथा हि 'योऽयं वायौ वाति सति अनुष्णाशीतस्पर्शो भासते, स स्पर्शः

न्यायबोधिनी

**एवं पृथिव्यादित्रिकं निरूप्य वायुं निरूपयति—रूपरहितेति। रूपरहितत्वे सति स्पर्शवत्त्वं वायोर्लक्षणम्। सति सप्तम्या विशिष्टार्थकतया सामानाधिकरण्यसम्बन्धेन रूपत्वावच्छिन्नप्रतियोगिताकाभावविशिष्टस्पर्शवत्त्वं वायोर्लक्षणम्। विशेषणांशानुपादाने स्पर्शवत्त्वमात्रस्य लक्षणत्वे पृथिव्यादित्रिकेऽतिव्याप्तिः, तत्रापि**

---

(१०) एतच्च वैशेषिकमतम्। न्यायनये तु वायोः प्रत्यक्षत्वं भवत्येव। अत एव न्यायमतानुसारिणि **तार्किकरक्षा**ग्रन्थे 'अप्रत्यक्षस्यापि वायो'रित्यादिप्रतीकव्याख्यानावसरे सर्वजनप्रसिद्धटीकाकृता **मल्लिनाथे**नोक्तम्—

"स्वमते वायोः स्पार्शनत्वेऽपि वैशेषिको भूत्वाह। अप्रत्यक्षस्येति।"

अत्र स्वमतं न्यायमतमेव। अपि च न्यायसूत्रव्याख्यात्मके **"न्यायमञ्जरी"**-ग्रन्थे जयन्तभट्टेन स्वहस्तितम्—

"प्रत्यक्षपवनवादिनां पक्षे पवनसमयेऽपि वक्तृवदननिकटनिहितहस्तस्पर्शेनैव स उपलभ्यते।"

क्वचिदाश्रित. गुणत्वात् रूपवत्'। न चास्य पृथिवी आश्रयः, उद्भूतस्पर्शवतः पार्थिवस्योद्भूतरूपवत्त्वनियमात्। न जलतेजसी, अनुष्णाशीतत्वात्। न विभुचतुष्टयम्, सर्वत्रोपलब्धिप्रसङ्गात्। न मनः, परमाणुस्पर्शस्यातीन्द्रियत्वात्। तस्माद् यः प्रतीयमानस्पर्शाश्रयः स वायुः। ननु 'वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वात् घटवत्' इति चेत्, न, उद्भूतरूपवत्त्वस्योपाधित्वात्। 'यत्र द्रव्यत्वे सति बहिरिन्द्रियप्रत्यक्षत्वं, तत्र उद्भूतरूपवत्त्वम्' इति घटादौ साध्यव्यापकत्वम्। पक्षे साधनाव्यापकत्वम्। न चैवं तप्तवारिस्थतेजसोऽप्यप्रत्यक्षत्वापत्तिः। इष्टत्वात्। तस्मात् रूपरहित-

न्यायबोधिनी

स्पर्शवत्त्वसत्त्वादतस्तद्वारणाय विशेषणोपादानम्। तावन्मात्रोपादाने आकाशादावतिव्याप्तिः, तत्रापि रूपरहितत्वसत्त्वादतस्तद्वारणाय विशेष्योपादानम्। अतिव्याप्तिर्नाम अलक्ष्ये लक्षणसत्त्वम्। यथा गोः शृङ्गित्वं लक्षणं कृतं चेल्लक्ष्यभूतगोभिन्नमहिष्यादावतिव्याप्तिस्तत्रापि शृङ्गित्वस्य विद्यमानत्वात्। अव्याप्तिर्नाम लक्ष्यैकदेशावृत्तित्वम्। लक्ष्यैकदेशे लक्ष्यतावच्छेदकाश्रयीभूते क्वचिल्लक्ष्ये लक्षणासत्त्वमव्याप्तिरित्यर्थः। यथा गोर्नीलरूपवत्त्वं लक्षणं कृतं चेल्लक्ष्यतावच्छेदकाश्रयीभूतश्वेतगवि अव्याप्तिस्तत्र नीलरूपाभावात्। असम्भवो नाम लक्ष्यमात्रे कुत्रापि लक्षणासत्त्वम्। यथा गोरेकशफवत्त्वं लक्षणं कृतं चेत् गोसामान्यस्य द्विशफवत्त्वेन एकशफवत्त्वस्य कुत्राप्यसत्त्वात्। अतिव्याप्त्यव्याप्त्यसम्भवानां निष्कृष्टलक्षणानि तु—लक्ष्यतावच्छेदकसमानाधिकरणत्वे सति लक्ष्यतावच्छेदकावच्छिन्नप्रतियोगिताकभेदसामानाधिकरण्यमतिव्याप्तिः। अव्याप्तिस्तु लक्ष्यतावच्छेदकसमानाधिकरणात्यन्ताभावप्रतियोगित्वम्। असम्भवस्तु लक्ष्यतावच्छेदकव्यापकीभूताभावप्रतियोगित्वम्॥ १२॥

---

अयं तु जयन्तभट्टो गङ्गेशोपाध्यायेनोपमानचिन्तामणौ 'जरन्नैयायिक'त्वेन कीर्त्तितः। इत्थं च सिद्धान्तमुक्तावलीकारप्रदर्शितो वायुप्रत्यक्षतापक्षस्य नवीनमते प्रश्नेपश्चिन्त्य। यतो न्यायभाष्यकृद्भिरपि "उद्भूतरूपमनुद्भूतस्पर्शं च प्रत्यक्षं यथा प्रदीपरश्मयः।"—(वात्स्यायनभाष्यम्, ३।१।३६) इत्यभिहितम्। तथा च तुल्ययुक्त्या उद्भूतस्पर्शस्य रूपरहितस्यापि वायोः प्रत्यक्षत्वं नासम्भवि।

त्वात् वायुरप्रत्यक्षः। इदानीं कार्यरूपपृथिव्यादिचतुष्टयस्योत्पत्तिविनाशक्रमः कथ्यते। ईश्वरस्य चिकीर्षावशात् परमाणुषु क्रिया जायते। ततः परमाणुद्वयसंयोगे सति द्व्यणुकमुत्पद्यते। त्रिभिर्द्व्यणुकैः त्र्यणुकम्। एवं चतुरणुकादिक्रमेण महापृथिवी, महत्य आपः, महत् तेजः, महान्वायुः उत्पद्यते। एवमुत्पन्नस्य कार्यद्रव्यस्य सञ्जिहीर्षावशात् क्रियया परमाणुद्वयविभागे सति द्व्यणुकस्य नाशः। ततस्त्र्यणुकस्य, तद्वच्चतुरणुकस्य इत्येवं पृथिव्यादिनाशः। असमवायिकारणनाशाद् द्व्यणुकनाशः। समवायिकारणनाशाद् त्र्यणुकनाश इति सम्प्रदाय.। सर्वत्र असमवायिकारणनाशाद् द्रव्यनाश इति नवीनाः। किं पुन. परमाणुसद्भावे प्रमाणम्। उच्यते। जालसूर्यमरीचिस्थं सूक्ष्मतम यद् रजो दृश्यते तत्सावयवं चाक्षुषद्रव्यत्वात् पटवत्। त्र्यणुकावयवोऽपि सावयव, महदारम्भकत्वात् तन्तुवत्। यो द्व्यणुकावयव' स एव परमाणुः। स च नित्य। कार्यत्वेऽनवस्थाप्रसङ्गात्। तथा च मेरुसर्षपयोरपि तुल्यपरिमाणापत्तेः। सृष्टिप्रलयसद्भावे 'धाता यथा पूर्वमकल्पयत्' इति श्रुतिः प्रमाणम्। सर्वकार्यद्रव्यध्वंसोऽवान्तरप्रलयः। सर्वभावकार्यध्वंसो महाप्रलयः। इति विवेकः।

**शब्दगुणकमाकाशम्। तच्चैकं विभु नित्यं च ॥१३॥**

आकाशं लक्षयति—शब्दगुणकमिति। ननु किं आकाशं पृथिव्या-

**न्यायबोधिनी**

आकाशं लक्षयति—शब्दगुणकमिति। अत्र गुणपदमाकाशे शब्द एव विशेषगुण इति द्योतनाय न त्वतिव्याप्तिवारणाय, समवायेन शब्दवत्त्वमात्रस्य सम्यक्त्वात्।

रूपं गन्धो रस· स्पर्शः स्नेहः सांसिद्धिको द्रवः।
बुद्ध्यादिभावनान्ताश्च शब्दो वैशेषिका गुणाः॥

तच्चैकमिति। अनेकत्वे मानाभावादिति भावः। विभ्वति।

---

आर्हतास्तु "वायुस्तावत् रूपादिमान् स्पर्शवत्त्वात् घटादिवत्। चक्षुरादिकरणग्राह्यत्वाभावात् रूपाद्यभाव इति चेन्न, परमाण्वादिषु अतिप्रसङ्गात्।" (राजवार्त्तिकम्, ९६ पृ०) इत्यादिग्रन्थेन वायौ रूपादिमत्त्वमपि प्रतिपादितवन्तः। एतच्चानुमानं सोपाधिकत्वात् नादरणीयम्। उपाधिस्तु चाक्षुषत्वसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वादि।

दिवन्नाना, नेत्याह—तच्चैकमिति । भेदे प्रमाणाभावादित्यर्थः । एकत्वादेव सर्वत्रोपलब्धेर्विभुत्वमङ्गीकर्तव्यमित्याह—विभ्विति । सर्वमूर्तद्रव्यसंयोगित्वं विभुत्वम् । मूर्तत्वं परिच्छिन्नपरिमाणवत्त्वं क्रियावत्त्वं वा । विभुत्वादेव आत्मवत् नित्यत्वमित्याह—नित्यं चेति (११) ।

## न्यायबोधिनी

**सर्वमूर्तद्रव्यसंयोगित्वं विभुत्वम् । मूर्तत्वं च क्रियावत्त्वम् । पृथिव्यप्तेजोवायुमनांसि मूर्तानि । पृथिव्यप्तेजोवाय्वाकाशेतिपञ्चकं भूतपदवाच्यम् । भूतत्वं नाम बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम् ॥१२॥**

---

(११) "यथा सर्व्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते"(—गीता, १३।३२) इति भगवद्वाक्येनाकाशस्य सर्व्वगतत्वं सूक्ष्मत्वं च प्रत्याय्यते । "आकाशकालदिगात्मनां सर्वगतत्व"मिति भाष्यव्याख्यानावसरे 'कन्दली'कारैरुक्तम्—"सर्वगतत्वं सर्वैर्मूर्त्तैः सह संयोगः आकाशादीनां, न तु सर्वत्र गमनं तेषां निष्क्रियत्वात् ।"—(२२ पृ०) 'सौक्ष्म्यम्' "बाह्येन्द्रियग्रहणयोग्यताविरह" इति **किरणावलीकारः** । निरवयवत्वं वा । तथा चानुमानम्—'आकाशो नित्यः सर्वगतत्वात् सूक्ष्मद्रव्यत्वाद् वा, ब्रह्मवत् ।'

**वेदान्तिनस्तु** "तस्माद् वा एतस्मादात्मन आकाशः सम्भूतः" (तैत्तिरीयोपनिषद्, १।२।१) इति श्रुतिं प्रमाणत्वेनोपन्यस्याकाशस्योत्पत्तिमत्त्वं वदन्ति । तन्न समीचीनम्, तादृशश्रुतिवाक्यस्य आकाशपदबोध्यतावच्छेदकशब्दांशे उत्पत्त्यन्वयबोधतात्पर्य्यकत्वस्वीकारेणैवोपपत्तौ आकाशप्रागभावतत्प्रागभावध्वंसादिरूपानन्तपदार्थकल्पनानौचित्यात् । तथा च—

"विद्धि नारद पञ्चैतान् शाश्वतानचलान् ध्रुवान् ।
महतस्तेजसोराशीन् कालषष्ठान् स्वभावतः ॥
आपश्चैवान्तरीक्षं च पृथिवीवायुपावकौ ॥"—
(शान्तिपर्व्व, २४७-६)

इति महाभारतीयवचने आकाशस्य नित्यत्वं सुव्यक्तमेव प्रतिपादितम् ।

'तुष्यतु दुर्जन' इति न्यायेन आकाशस्योत्पत्तिमत्त्वस्वीकारेऽपि तस्य विनाशित्वसिद्धिः कथं स्यात् ? न च आकाशो विनाशी जन्यभावत्वाद् घटवदित्यनुमानेनैवाकाशस्य विनाशित्वं सेत्स्यतीति वाच्यम्, अत्र द्व्यानुपादानकद्रव्यभिन्नत्वस्योपाधित्वात् ।

केचित्तु श्रुतिवाक्यस्थमाकाशपदं स्थिरवायुपरम् । तथा च 'धार्य्यः कथङ्कार-

**अतीतादिव्यवहारहेतुः कालः स चैको विभुर्नित्यश्च ॥ १४ ॥**

कालं लक्षयति—अतीतेति। सर्वाधारः कालः सर्वकार्ये निमित्तकारणं च।

**प्राच्यादिव्यवहारहेतुर्दिक्। सा चैका नित्या विभ्वी च ॥१५॥**

दिशो लक्षणमाह—प्राचीति। दिगपि कार्यमात्रे निमित्तकारणम् (१२)।

### न्यायबोधिनी

कालं लक्षयति—अतीतेति। व्यवहारहेतुत्वस्य लक्षणत्वे घट इति व्यवहारहेतुभूतघटादावतिव्याप्तिः। तद्वारणाय अतीतादीति विशेषणोपादानम् ॥१४॥

दिशो लक्षणमाह—प्राच्येति। उदयाचलसन्निहिता या दिक् सा प्राची। अस्ताचलसन्निहिता या दिक् सा प्रतीची। मेरोः सन्निहिता या दिक् सोदीची। मेरोर्व्यवहिता या दिक् साऽवाची॥१५॥

---

महं भवत्या वियद्विहारी वसुधैकगत्ये'ति नैषधीयचरितकाव्ये वियत्पदस्य तादृशस्थिरवायुबोधकत्वमेव दृश्यते। इति न कोऽपि दोषः पदमादधातीत्याहु॰।

शिरोमणिभट्टाचार्य्यास्तु "शब्दनिमित्तकारणत्वेन क्लृप्तस्येश्वरस्यैव शब्दसमवायिकारणत्वम्।" (**पदार्थतत्त्वनिरूपणम्**) इत्यादिग्रन्थेनाकाशस्य द्रव्यान्तरत्वं खण्डितवन्तः। "अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च य"दित्यादिकठश्रुति (१।३।१५) विरोधेन तादृशसिद्धान्तो न समीचीन इत्यस्मद्गुरुचरणाः।

(१२) '**चन्द्रकान्तीयभाष्य**'कारतया प्रसिद्धा महामहोपाध्यायचन्द्रकान्ततर्कालङ्कारभट्टाचार्य्यास्तदीये "**फेलोशिपेर लेक्चार**" इत्याख्ये वङ्गभाषामयग्रन्थे(११८–१९ पृष्ठे) दिक्कालयोर्द्रव्यान्तरत्वं न महर्षिकणादाभिमतमिति सिद्धान्तितवन्त॰। तेषामयमाशय—महर्षिकणादास्तु "कारणगुणपूर्वकः कार्य्यगुणो दृष्टः।" "कार्य्यान्तराप्रादुर्भावाच्च शब्द॰ स्पर्शवतामगुणः।" "परत्र समवायात् प्रत्यक्षत्वाच्च नात्मगुणो न मनोगुण॰।"(२।१।२४–२६) इति सूत्रत्रयेण शब्दस्य स्पर्शवतामात्मनो मनसश्च गुणत्वं प्रतिषिध्य "परिशेषाल्लिङ्गमाकाशस्य"(२।१।२७) इति सूत्रे पारिशेष्यात् तस्याकाशगुणत्वं प्रत्यपादयन्। एवं च तन्मते दिक्कालयोर्द्रव्यान्तरत्वे शब्दस्य तद्गुणत्वनिषेधोऽप्यावश्यक आसीत्। अतः काणादनये दिक्कालौ नाकाशादतिरिक्ताविति स्फुटम्।

ज्ञानाधिकरणमात्मा । स द्विविधः—परमात्मा जीवात्मा

मतमेतत् तेषां वैशेषिकसूत्रभाष्येऽपि दृश्यते । तदुक्तं "परिशेषाल्लिङ्गमाकाशस्य"—(२।१।२७) इति सूत्रभाष्ये—"आचार्य्यप्रवृत्तिर्ज्ञापयति कालो दिक् चाकाशमेवेति । यदयमन्येषां व्यतिरेकमाकाशे साधयति न कालदिशोः ।" इति । "कार्य्यविशेषेण नानात्व" (७।२।१३) मिति सूत्रभाष्येऽपि तैरेवमेव भाषितम् ।

तर्कालङ्कारसिद्धान्तोऽयमस्माकं न मनोरमः । यतः—"परत्र समवायात् प्रत्यक्षत्वाच्च नात्मगुणो न मनोगुण" इति सूत्रेणैव शब्दस्य दिक्कालगुणत्वमपि प्रतिषिद्धम् । तथा च उपस्कारकृता स्वहस्तितम्—

"नात्ममनसोर्गुण इति समासे कर्त्तव्ये यदसमासकरणं तेन तुल्यन्यायतया प्रत्यक्षत्वादित्यनेनैव हेतुना दिक्कालयोरपि गुणत्वं शब्दस्य प्रतिषिद्धमिति सूचितम्"

कणादसूत्रविवृतिकारोऽप्याह—

"मनःपदं दिक्कालयोरप्युपलक्षकं तथा च शब्दो न दिक्कालमनसां गुणः प्रत्यक्षत्वात् रूपादिवदिति, व्यतिरेके कालपरिमाणादिवदित्यनुमानप्रकारः ।"

स्वभाव एव सूत्राणामयं यत् तान्यल्पाक्षराण्येव प्रकाशयन्ति गभीरमर्थम् । अत एव "अल्पाक्षरमसन्दिग्ध—" मित्यादिसूत्रलक्षणमुक्तमभियुक्तैः । एवं च सूत्रे दिक्कालयोः कण्ठतश्चानुक्तिर्न खलु महर्षेर्न्यूनतापादिका । यदि कण्ठानुक्तत्वेनैव विपरीतसिद्धान्तः करणीयः, तर्हि रूपादयः शब्दान्ताश्चतुर्विंशतिर्गुणाः कणादाभिमता इत्यपि वक्तुं न शक्येत । यतः सूत्रे रूपादिप्रयत्नान्ताः सप्तदश गुणा एवोद्दिष्टाः । तथा च "तार्किकरक्षायां" वरदराजः—

"चतुर्विंशतिरुद्दिष्टा गुणाः कणभुजा स्वयम् ।
रूपाद्याः शब्दपर्य्यन्ताः…… ……………॥"

तदुक्तम् । रूपरसगन्धस्पर्शाः संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नाश्च गुणा इति । (वैशेषिकसूत्रम्, १।१।६) चशब्देन गुरुत्वद्रवत्वस्नेहसंस्कारधर्म्माधर्म्मशब्दाः संगृहीताः । ततश्च कण्ठोक्ताः सप्तदश चशब्दसमुच्चिताः सप्तेति गुणाश्चतुर्विंशतिः ।"

समर्थितमेतत् चन्द्रकान्तीयवैशेषिकभाष्येऽपि—"चकारेण गुरुत्वलघुत्वद्रवत्वस्नेहसंस्कारधर्म्माधर्म्मशब्दसमवायशक्तिप्रभृतीनाचार्य्यः समुच्चिनोति ।"

एवं च समुच्चायकचशब्देन गुरुत्वादिगुणानामिव उपलक्षकमनःपदेनैव दिक्कालानां संग्रहः सूपपादः । अत एव "पृथिव्यापस्तेजो वायुराकाशं कालो दिगात्मा मन इति द्रव्याणि" (१।१।५) गुणैर्दिग् व्याख्याता—(७।१।२४) "कारणे कालः"—(७।१।२५) इत्यादिकाणादसूत्राण्यपि साधु सङ्गच्छन्ते ।

चेति (१३) तत्रेश्वरः सर्वज्ञः परमात्मैक एव । जीवात्मा प्रति-

प्रशस्तपादाचार्य्यैस्तु "श्रोत्रग्राह्यत्वाद् वैशेषिकगुणभावाच्च न दिक्काल-मनसाम् ।" इत्येकोक्त्यैव शब्दस्य दिक्कालमनोगुणत्वं निराकृतम् । इत्यल-मनल्पजल्पनेन ।

(१३) अथ "तत्त्वमसि श्वेतकेतो" ( छान्दो० ६।१४।३ ) "अहं ब्रह्मास्मि" (बृह०१।४।१०) "सर्वं खल्विदं ब्रह्म" (छा० ३।१४।१) "आत्मैवेदं सर्वम्" (छा० ७।२५।२) "ब्रह्मैवेदं सर्वम्" (२।२।११) इत्येवमाद्याभिः श्रुतिभिः, स्मृतिभिश्च "वासुदेवः सर्वमिति स महात्मा सुदुर्लभ" (गीता, ७।१९) इत्यादिभिः समस्तस्य जगतः सुतरां जीवात्मनां च परमात्माऽनन्यत्वप्रतिपादनात् कथमयं विभागः सम्भ-वदुक्तिकः ? इति चेदत्र **गुरुचरणाः**—

"विशेष्यविधया वा विशेषणविधया तादात्म्यसम्बन्धेन प्रमात्मकान्वयबोध-तात्पर्य्येण प्रयुक्तानां तदेतत्सर्वविश्वकिमादिरूपसर्वनाम्नां सर्वत्रैव विशेष्यस्य वा विशेषणस्य बोधकाजहल्लिङ्गपदलिङ्गभाजित्वनियमः । यत्र त्वभेदारोपः शास्त्रकारा-भिमतस्तत्र प्रतिपाद्यपुरुषाणां प्रमापार्थक्यसंवेदनस्वरूपप्रयोजनकतयोक्तसर्व्वना-मोत्तरं सामान्यत्वान्नपुंसकमित्यनुशिष्टिमवलम्ब्य क्लीबलिङ्गव्यञ्जकविभक्तिरेव प्रयु-ज्यते शास्त्रकारैः । सर्वः पदार्थः सर्वे वा पदार्था इति लोकतः शास्त्रतश्चैतदात्म्यमिदं सर्वं स आत्मेत्यादि । अत्र च पुंलिङ्गात्मपदसामानाधिकरण्येन साकाङ्क्षसर्वनामतत्-त्पदस्य पुंल्लिङ्गता । आरोपस्थलन्तु "तत्त्वमसि श्वेतकेतो" "वासुदेवः सर्वमिति" "त्वत्तः सर्वं त्वं हि सर्वं स्मरारे" "तत् किं यत्त्वं नास्यतस्त्वां नतोऽस्मि" इत्यादौ सर्वत्र युष्मच्छब्दवासुदेवशब्दयोः पुंलिङ्गत्वेऽपि तच्छब्दार्थाभेदान्वयतात्पर्य्येण प्रयुक्ततत्पदसर्व्वपदयत्पदेभ्यः क्लीबलिङ्गव्यञ्जकविभक्तिरेव प्रयुक्ता । जीवेषु ब्रह्माभेद-स्य "इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः," "परमं साम्यमुपैति," "परमं ब्रह्म वेद ब्रह्मैव भवति" इत्यादिसुस्पष्टबहुप्रमाणबाधितस्य सर्वभूतेषु तदभेदस्य तु "कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वेति"[२।१।२६, अस्यार्थस्तु 'कृत्स्नानामुपादेय-गतापाकजविशेषगुणानां 'प्रसक्तिः' आपत्तिः, ब्रह्मणीति शेषः । 'निरवयत्वशब्दस्य' निरवयत्वव्यवहारस्य 'कोपः' आपत्तिः, अवयविनीति शेषः । ] व्यासकृतब्रह्मसूत्र-प्रतिपादिततर्कबाधितस्य .. . ... ......आहार्य्यबोधजनकतया तत्पदेभ्यः क्ली-बलिङ्गसूचिका विभक्तिः साधु सङ्गता ।"—(अद्वैतवादखण्डनम्, १२-१३ पृ०)

अय भावः—"सर्ववाद्यमयी घण्टे"त्यादिपरमवाक्येषु घण्टायां भेर्य्यादिसकल-वाद्याभेदभावनाया इव "देवो भूत्वा, देवानप्येति य एवं विद्वानेतदुपास्ते"— (बृह० ४।१।२) "समत्वभावना नित्यं जीवात्मपरमात्मनोः । समाधिमाहुर्मुनयः

प्रोक्तमष्टाङ्गलक्षणम्"—( तन्त्रसारधृतगौतमीयवचनम् ) "देवीबुद्धा स्वमात्मानं सम्पूज्य साधकोत्तमः । तारिणीं सिञ्चयामीति जलं मूर्ध्नि विनिक्षिपेत् ॥"—( तन्त्रसारधृतसिद्धसारस्वतवचनम् ) "सोऽहम्भावेन पूजयेत्" ( तन्त्रसारधृतागमवाक्यम् ) "दिक्कालाद्यनवच्छिन्ने कृष्णे चेतो निधाय च । तन्मयो भवति क्षिप्रं जीवब्रह्मैक्ययोजनात् ॥"—( तन्त्रसारधृतगौतमीयवचनम् ) इत्यादिमहावाक्येषु जीवेषु ब्रह्माभेदभावनायाः समुपदिष्टतया तादृशभावनायाश्च "ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति । समः सर्व्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥" ( गीता, १८।५४ ) इत्यादिभगवद्वाक्येन च परमेष्टसाधनत्वावगमात् शोकरागद्वेषादिनिवृत्तये समुत्पत्तये च परमपुरुषार्थस्य भ्रमरूपायामपि तादृश्यां भावनायां यतितव्यमिति "तत्त्वमसि श्वेतकेतो" "सर्वं खल्विदं ब्रह्मे"त्यादिरूपकैवल्योपायनिर्देशकवेदान्तवाक्यानां तात्पर्य्यम् । तादृशाभेदभावनाया भ्रमत्वेऽपि न क्षतिः, प्रमैव फलं जनयेन्न तु भ्रम इत्यनियमात् । तथा नियमे भगवत्परिगृहीतमूर्त्तीरसाक्षात्कृतवतामस्मदादिमहर्षिपर्य्यन्तानां प्रतिपुरुषं जायमाना विषमभावना फलविधायिनी न स्यात् । न ह्येकैकसाधकं प्रति प्रतिक्षणं परमेश्वरः प्रतिपुरुषध्यानकल्पितमूर्त्तीः परिगृह्णाति । अभीष्टसाधिकाऽप्येतादृशी भावना न हि सर्व्वत्र प्रमारूपैव । अत एव मन्त्रात्मकदेवतावादिमीमांसकाः साकारपरमेश्वरध्यानविधायकविधिवाक्यमहिम्ना तादृशध्यानं कर्त्तव्यतयाऽङ्गीकृतवन्तः ।

एवञ्च "सर्वं खल्विदं ब्रह्मे"त्याहार्य्यभावनोत्तरं जगत्कर्तृत्वादिना पारमार्थिकं ब्रह्मतत्त्वज्ञानमुपजायते । "सर्वं खल्विदं ब्रह्मे"त्युत्तरवर्त्ति-"तज्जलानिती"-त्यंशेन, "ततो मां तत्त्वतो ज्ञात्वे"त्यन्तभगवद्गीतया ( १८।५५ ) च तथैव प्रतिपादितत्वात् । अत एव—

"द्वा सुपर्णा सयुजा सखाया
समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्ति
अनश्नन्नन्यो अभिचाकशीति ॥"—
( मुण्ड० ३।१ )

इति श्रौतवाक्ये जीवस्य कर्मफलोपभोक्तृत्वेन परमात्मनश्च तदत्यन्तभिन्नत्वेनोपवर्णनं साधु सङ्गच्छते । मुक्तावपि पुण्यपापापायादात्यन्तिकदुःखनिवृत्तेश्च जीवात्मा परमात्मसाम्यमेवोपैति, न तु तत्स्वारूप्यमपीति प्रतिपादयति मन्त्रान्तरम् ।—

"यदा पश्यः पश्यते रुक्मवर्णं
कर्त्तारमीशं पुरुषं ब्रह्मयोनिम् ।

तदा विद्वान् पुण्यपापे विधूय
निरञ्जनः परमं साम्यमुपैति ॥"–( मुण्ड० ३।३ )

तथा च—

"इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥"

इति भगवद्वाक्येऽपि सादृश्यवाचकसाधर्म्यपदमेव प्रयुक्तम् । शङ्कराचार्यैस्तु—"मम परमेश्वरस्य साधर्म्यं मत्स्वरूपतामागताः प्राप्ता इत्यर्थो न तु समानधर्म्मता साधर्म्यं क्षेत्रज्ञेश्वरयोर्भेदानभ्युपगमा"दिति व्याख्यातम् । तन्न समीचीनम्, सादृश्यबोधकपदानां स्वरूपत्वलक्षणाज्ञानेषु शाब्दजनकताया अदृष्टचरत्वेन तत्र तत्पदवृत्तित्वस्यापसिद्धान्तकवलितत्वात् । परन्तु सदृशादिपदप्रयोगासत्त्वेऽपि "घृतममृतम्" "गौर्वाहीक" "शीतांशुर्मुखमुत्पले तव दृशौ" ( रत्नावल्याम् ) "पुरोहितोऽयं राजे"त्यादौ अमृतादिपदानां तत्तत्सदृशे लक्षणैवौत्सर्गिकी । "रम्भास्तम्भनिभं तवोरुयुगलं बाहू मृणालोपमा"वित्याद्युक्तिस्तु स्वरूपलक्षणया कदाचिदपि न रम्भास्तम्भं मृणालं च बोधयेत् ।

अपि च परब्रह्मणि दुःखाभावसत्तायाः सर्वैरेवाऽवगतत्वेन तत्त्वज्ञानात् जीवानां विशुद्धब्रह्मस्वरूपतालाभे तेषु दुःखाभाववत्त्वं निश्चितमेवेति दर्शितगीतावाक्यस्थस्य "सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति चे"त्यंशस्याद्वैतवादिमतेऽनाकाङ्क्षिताभिधानत्वापत्तिः । अस्मन्मते तु तदंशप्रदर्शनस्य साधर्म्यविवरणपरतया सर्व्वज्ञत्वसर्व्वकर्त्तृत्वालाभसूचकतया च सुष्ठु सङ्गतिरेव । प्रागूदर्शितश्रुतौ "कर्त्तारमीशम्" इत्यंशस्य सार्थक्याय जगत्कर्त्तृत्वेन ब्रह्मज्ञानमेव मुक्तौ कारणं न तु परेषां निष्प्रकारकब्रह्मज्ञानमपीत्यवधेयम् ।

अस्त्यनुमानसाम्राज्यमपि जीवादिषु ब्रह्मणः पारमार्थिकभेदसाधकम् । यथा—जगत्कर्त्तृत्वप्रकारकप्रमाविशेष्यत्वम्, जगत्कर्त्तृत्वावच्छिन्नं प्रतियोगित्वम्, निरूपकत्वं वा एतदेकतरादृष्टनाशोभयाभावस्य साध्यत्वम्, पक्षत्वं सर्व्वस्य, हेतुत्वं च यथाकामं वाच्यत्वप्रमेयत्वगगनाभावादेः । सहचारदर्शनं न्यायनये घटपटादौ, अद्वैतमते मायादौ । यद्वा अदृष्टवद्वृत्तिद्वयावृत्तिधर्म्मप्रतियोगिकस्वरूपसम्बन्धेन जगत्कर्त्तृवृत्तिधर्म्माभावस्य साध्यत्वं पक्षादि पूर्व्ववत् ।

अथ वा नित्यत्वानन्दस्वरूपत्वोभयाभावस्य नित्यानुयोगिकस्वरूपसम्बन्धेन आनन्दस्वरूपत्वाभावस्य शरीर्य्यनुयोगिकस्वरूपसम्बन्धेन ज्ञानस्वरूपत्वाभावस्य, आनन्दतादात्म्यप्रतियोगिकस्वरूपज्ञानतादात्म्याभावस्य, बहिःप्रत्यक्षविषयत्वानन्दतादात्म्योभयाभावस्य वा साध्यत्वम् । पक्षहेतू पूर्ववत् ।

अविद्यादौ व्यभिचारभिया तादृशहेतुना न सर्व्वत्र ज्ञानस्वरूपत्वमानन्द-

स्वरूपत्वं वा साधयितुं शक्येत। न चाविद्याभिन्नत्वमेव तत्साधकमस्तु इति वाच्यम्, हेतोरुभयवाद्यसिद्धत्वात्।

नन्वनुकूलतर्कस्य दुर्लभतया ईदृशहेतुसाध्यस्थले व्याप्तिनिश्चयो न भवितुमर्हतीति चेन्न, तर्कस्येव निरुपाधित्वस्यापि व्याप्तिनिश्चायकतायाः सर्वसम्मतत्वात्। अत एव सिद्धान्तलक्षणे 'निरुपाधित्वमेव प्रयोजक' मिति तर्कालङ्कारस्य जगदीशस्य लिखनम्। न चात्र मायात्वमेवोपाधिरिति वाच्यम्, तस्योभयवाद्यसिद्धत्वात्। अद्वैतवादिमते साध्याव्यापकतया प्रागभावत्वस्यापि नोपाधित्वं सम्भवति।

नन्वस्त्वनादित्वमेवोपाधिरिति नाशङ्कनीयम्, नैयायिकैर्मायायाः पदार्थान्तरत्वाऽस्वीकारेण प्रागभावस्य च युक्त्या दीधितिकृत्खण्डितत्वेन तादृशानाद्यन्तर्भावतः साध्यव्यापकत्वनिश्चयस्य नैयायिकमते असम्भवात्। यतः सर्वमत एव साध्यवत्त्वेन निश्चितधर्म्यन्तर्भावेणैव साध्यव्यापकतया निश्चित उपाधिर्भवेत्। अत एव द्रव्ये संयोगाभावानुमाने निर्गुणत्वस्योपाधित्वमुक्तं दीधितिकारेण। तस्य साध्यवत्त्वेनोभयवादिनिश्चितगुणाद्यन्तर्भावेण साध्यव्यापकतया निश्चितत्वात्। निष्कर्षस्तु—साध्यवत्त्वेनोभयवादिप्रतिवादिनिश्चितयावद्धर्म्मिवृत्तित्वं साध्यव्यापकत्वम्। न चात्यन्ताभावत्वमेवोपाधिरस्तु इति वाच्यम्, वेदान्तिप्रभृतिमते अत्यन्ताभावस्य धर्म्मिस्वरूपावश्यकत्वात्। अन्यथा तन्मते नित्यपदार्थान्तरस्वीकारापत्तिः।

अत एव सर्व्वं वाच्यं ज्ञेयत्वादित्यादिकेवलान्वयिनि तद्रूपवान् तद्रसादित्यादौ च तर्कस्य दुर्लभत्वेऽपि निरुपाधित्वमेव व्याप्तिनिश्चायकम्। अथ निरुक्तकेवलान्वय्यादिसद्धेतुस्थले निरुपाधित्वं कथं व्याप्तिनिश्चायकं भवेत्, तस्य सिद्ध्यसिद्धिपराहतत्वादिति चेन्न, यतो निरुपाधित्वं हि साध्यव्यापकत्वे सति साधनाव्यापकमित्याकारकं खण्डशः प्रसिध्या यज्ज्ञानं निरूप्यनिरूपकभावापन्नतदीयविषयताविशेषस्य प्रमीयविषयत्वप्रतियोगिकस्वरूपसम्बन्धेनोभयाभाववत्त्वमेव। इति ध्येयम्।

किञ्च "बहु स्यां प्रजायेय" (छा० ६।२।३, तै० २।६) इत्येव परमवाक्यं समुपलभ्यते। तदर्थस्तु अहं बहु भविष्यामि। एतेन सृष्टिप्राक्काले अनादिबहुमोहनिबन्धनो बहुत्वव्यवहारो मयि नास्तीत्येव समायातम्। अन्यथा भविष्यत्त्वप्रयोगो न स्यात्। 'प्रजायेये'त्यस्यार्थस्तु ब्रह्मविष्णुमहेश्वरादि-सकलावतारान्त-कलेवरधारित्वरूपं प्रकृष्टजननमेवाश्रयिष्यामि, न तु पश्वादिशरीरधारित्वरूपापकृष्टजन्मान्यपि, प्रशब्दस्वारस्यात्। तथा च ब्रह्मण एव जीवत्वमिति शङ्का निराकृता। ब्रह्मण एव सर्वजीवशरीरधारित्वे 'बहु स्या' मित्यंशेनैव सामञ्जस्यसम्भवे 'प्रजायेये'त्यस्य पुनरुक्तत्वापत्तेः। अस्मन्मते च सर्व्वशरीरधारित्वशङ्कानिवृत्त्यर्थमेव तत्प्रयुक्तेः सार्थक्यम्। एवं ब्रह्मणो विट्कीटपर्य्यन्तसर्वशरीरधारित्वस्य श्रुतिप्राप्तत्वे 'सर्व'मित्येव प्रयोग-

शरीरं भिन्नो (१४) विभुर्नित्यश्च ॥१६॥

आत्मनो लक्षणमाह—ज्ञानेति। आत्मानं विभजते—स द्विविध इति। परमात्मनो लक्षणमाह—तत्रेति। नित्यज्ञानाधिकरणत्वम् ईश्वरत्वम्।

नन्वीश्वरस्य सद्भावे किं प्रमाणं न तावत्प्रत्यक्षम्। तद्धि बाह्यं आभ्यन्तरं वा। नाद्यः, अरूपिद्रव्यत्वात्। नान्त्यः, आत्मसुखादिव्यतिरिक्तत्वात्। नाप्यनुमानम्, लिङ्गाभावात्। नाप्यागमः, तथाविधागमाभावात् इति चेत्, न, 'क्षित्यङ्कुरादिकं कर्तृजन्यं कार्यत्वात् घटवत्' इत्यनुमानस्य

न्यायबोधिनी

आत्मानं निरूपयति—ज्ञानाधिकरणमिति। अधिकरणपदं समवायेन ज्ञानाश्रयत्वलाभार्थम् ॥ १६ ॥

---

स्तिष्ठेन्न तु बह्विति। इति संक्षेपः। विस्तरस्तु गुरुचरणानाम् **अद्वैतवादखण्डन-मायावादनिरासादौ** सुधीभिरनुसन्धेयः।

स च परमात्मा न विज्ञानानन्दादिस्वरूपः किन्तु तदाश्रयः। 'विज्ञानमानन्दं ब्रह्मे'ति सामानाधिकरण्यं च नीलो घटो मधुरो गुडः शीतः समीरणः इत्यादिवदुपपादनीयम्। तथा च "स एको ब्रह्मण आनन्दः" (तै० २।८) "आनन्दं ब्रह्मणो विद्वान्" (तै० २।४,९) "यः सर्वज्ञः सर्ववित्" (मुण्ड० १।१।९,२।२।७) इत्यादिश्रौतवाक्यमानन्दात् ज्ञानाच्च ब्रह्मणो भेदमेव प्रतिपादयति। तदुक्तं ग्रन्थादौ **सर्वदर्शनसंग्रह**कारैरपि—

"नित्यज्ञानाश्रयं वन्दे निःश्रेयसनिधिं शिवम्।" इति।

(१४) तथा च **वैशेषिकसूत्रम्**—"नानात्मानो व्यवस्थातः।—( ३।२।२० ) अत्रोप**स्कारकृ**तः,—

"नाना आत्मानः कुतः व्यवस्थातः। 'व्यवस्था' प्रतिनियमः। यथा कश्चिदाढ्यः कश्चिद् रङ्कः कश्चित् सुखी कश्चिद् दुःखी कश्चिदुच्चाभिजनः कश्चिन्नीचाभिजनः कश्चिद् विद्वान् कश्चिज्जाल्म इतीयं व्यवस्था आत्मभेदमन्तरेणानुपपद्यमाना साधयत्यात्मनां भेदम्। न च जन्मभेदेन बाल्यकौमारवार्द्धक्यभेदेन वा एकस्याप्यात्मनो यथा व्यवस्था तथा चैत्रमैत्रादिदेहभेदेऽपि स्यादिति वाच्यम्, कालभेदेन विरुद्धधर्माध्याससम्भवात्।"

प्रमाणत्वात्। उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वं कर्तृत्वम् (१५) उपादानं समवायिकारणम्। सकलपरमाण्वादिसूक्ष्मदर्शित्वात् सर्वज्ञत्वम् (१६)। 'यः सर्वज्ञः स सर्ववित्' इत्यागमोऽपि प्रमाणम्।

---

(१५) ज्ञानेच्छाप्रयत्नानां यौगपद्याभावेऽपि ज्ञानजन्येच्छाजन्यकृतिमत्त्वमित्यर्थः। कृतिमात्रसमवधायित्वे चान्योद्देशेन प्रक्षिप्तशरप्रमीतगवादिवधकर्तृत्वापत्तिः। न चैवमिष्टापत्तिरिति वाच्यम्, प्रायश्चित्तवैलक्षण्योपदेशानर्थक्यप्रसङ्गात्। एवं च—"ज्ञानेच्छाद्यन्यतमगर्भलक्षणत्रितयं विवक्षितम्, अन्यथा व्यर्थविशेषणत्वापत्तेः।" इति वेदान्तपरिभाषाग्रन्थश्चिन्त्यः।

जीवात्मनो गुणास्तु चतुर्दश। तथा च **भाषापरिच्छेदे**—

"बुद्ध्यादिषट्कं संख्यादिपञ्चकं भावना तथा।
धर्माधर्मौ गुणा एते आत्मनः स्युश्चतुर्दश॥"

"तत्र ज्ञानसुखदुःखेच्छाद्वेषप्रयत्नाः प्रत्यक्षसिद्धाः, धर्माधर्मभावनास्त्वतीन्द्रियाः। 'संख्यापरिमाणे अपि प्रत्यक्षे इत्येके।' इति **कणादरहस्ये** शङ्करमिश्राः।

(१६) ईश्वरस्य चाष्टौ गुणाः। तदुक्तं **भाषापरिच्छेदे**—

"संख्यादयः पञ्च बुद्धिरिच्छा यत्नोऽपि चेश्वरे।" तत्र ज्ञानेच्छायत्नाः सर्वविषयकाः। **न्यायवार्त्तिककृतस्तु**—

"तत्र हि नित्या बुद्धिः संख्यादयश्च सामान्यगुणाः षड्गुण आकाशवदीश्वर" इत्याहुः। प्रदर्शितमेतच्च मतं **न्यायकन्दल्याम्**, "अन्ये तु बुद्धिरेव तस्याव्याहता क्रियाशक्तिरित्येवं वदन्त इच्छाप्रयत्नावप्यनङ्गीकुर्वाणाः षड्गुणाधिकरणोऽयमित्याहुः" परन्तु **तात्पर्य्यटीकाकृतः**,—

"बुद्धिवदिच्छाप्रयत्नावपि तस्य नित्यौ सकर्तृकत्वसाधनान्तर्गतौ वेदितव्यौ। ज्ञानचिकीर्षाप्रयत्नसमवायलक्षणत्वात् कर्तृत्वस्य तेषां च परस्पराविनाभावादन्यतर (म ?) सिद्धावितरयोः सिद्धेः।" इति प्राहुः।

**न्यायमञ्जरीकारास्तु** "तदेवं नवभ्य आत्मगुणेभ्यः पञ्च ज्ञानसुखेच्छाप्रयत्नधर्माः सन्तीश्वरे," इत्याहुः। तथा च तन्मते संख्यापरिमाणपृथक्त्वसंयोगविभागा ज्ञानसुखेच्छाप्रयत्नधर्माश्चेति दश गुणा ईश्वरस्य। तत्र "धर्मस्तु भूतानुग्रहवतो वस्तुस्वाभाव्याद् भवन् न वार्यते, तस्य च फलं परमार्थनिष्पत्तिरेव। सुखं त्वस्य नित्यमेव नित्यानन्दत्वेनागमात् प्रतीतेः। असुखितस्य चैवंविधकार्यारम्भयोग्यताभावात्।" इति तत्र धर्मसुखयोः सद्भावे **मञ्जरीकार**लिखनम्। (२०१ पृ०)

न्यायभाष्यकृद्भिरपि "सङ्कल्पानुविधायी चास्य धर्म्म"—(४।१।२१) इति ग्रन्थेनेश्वरे धर्म्मवत्त्वमङ्गीकृतम् । तदुक्तं तात्पर्य्यटीकायाम्,—"नन्वस्य कर्म्मानुष्ठानाभावात् कुतो धर्म्मः, तथा चाणिमादिकमैश्वर्य्यं कार्य्यरूपं विनैव कर्म्मणेत्यकृताभ्यागमप्रसङ्ग इत्यत आह—सङ्कल्पानुविधायी चास्य धर्म्म इति । ... मा भूद् बाह्यानुष्ठानं सङ्कल्पलक्षणानुष्ठानजनितधर्म्मफलमस्यैश्वर्य्यं जगन्निर्म्माणफलमिति नाकृताभ्यागमप्रसङ्ग इत्यर्थः ।" इति । ( ४२० पृ० )

इदमत्रावधातव्यम् ,—अणिमाद्यष्टविधमैश्वर्य्यमीश्वरधर्म्मफलमित्युक्तमापाततो भाष्यकारैः, वस्तुतस्तस्यैश्वर्यं नित्यम् । एवं चेश्वरे धर्म्मस्वीकरणमनावश्यकमिति नाशङ्कनीयम्, ईश्वरधर्म्मस्यैव प्रत्यात्मवृत्तिधर्म्माधर्म्मसञ्चयानां पृथिव्यादिभूतानां च सृष्टौ प्रवर्त्तकत्वात् । तदुक्तं तात्पर्य्यटीकायाम्—

"प्रत्यात्मवृत्तिधर्म्माधर्म्मसन्निचयाधिष्ठानं प्रत्यात्मवृत्तिसङ्कल्पानुविधायिन ईश्वरस्य धर्मस्य प्रयोजनमिति ।"

वस्तुतस्तु धर्म्मो नेश्वरगुण इत्येव वार्त्तिककारमतम् । अत एव वार्त्तिकतात्पर्य्यटीकायां वाचस्पतिमिश्राः—

"अभ्युपेत्येश्वरधर्म्ममेतदुक्तं भाष्यकृता । परमार्थतस्तु नेश्वरस्य धर्म्मसद्भावे प्रमाणमस्ति, नित्याभ्यामेव ज्ञानक्रियाशक्तिभ्यां सकलकार्य्योत्पादसिद्धेरित्याशयवानाह,—न चेश्वरे धर्म्मोऽस्तीति ।" इति प्राहुः ।

यद्यपि "संख्यापरिमाणपृथक्त्वसंयोगविभागबुद्धय एव तस्य ( ईश्वरस्य ) गुणाः" इत्यादिग्रन्थेनेश्वरस्य षड्गुणाधिकरणत्वमेव वार्त्तिककारैः प्रतिपादितम्, तथापि "इच्छा तु विद्यतेऽक्लिष्टाऽव्याहता सर्वार्थेषु यथा बुद्धि"रित्यस्यापि पश्चात् स्वहस्तितत्वेन संख्यादयः पञ्च सामान्यगुणा बुद्धीच्छे च विशेषगुणावीश्वरस्येति वार्त्तिककारनिष्कृष्टाभिप्रायः ।

ईश्वरे नित्यसुखवत्ताया न्यायमञ्जरीकाराङ्गीकृतत्वेऽपि "सुखस्यापि नित्यत्वं प्रमाणविरुद्धं कल्पयितुमशक्यमिति"–(१।१।२२)–न्यायभाष्यग्रन्थदर्शनेन सुखस्य नित्यत्वं भाष्यकाराऽननुमतमिति प्रतीयते । न चैवमागमविरोध इति शङ्क्यम्, भाष्यग्रन्थविवरणावसरे न्यायवार्त्तिककारैः—

"आगमोऽप्येव विचारणीय .......... दृष्टश्च दुःखाभावेऽपि सुखशब्दप्रयोगो बहुधा लोक इति । एवञ्च ज्वरादिवियोगे लौकिका व्याचक्षाणा भवन्ति सुखिनः संवृत्ताः स्म" इति सिद्धान्तितत्वात् ।

अनुमानचिन्तामणौ 'मुक्तिवादे' ( जी० स० ४७ पृ० ) "न च नित्ये सुखे मानमस्ती"त्यादेः "तस्मादानन्दं ब्रह्मेति मत्वर्थीयाच्प्रत्ययान्तत्वेनानन्दवत्त्वं बोध्यते नाभेद', अन्यथा नपुंसकत्वानुपपत्ते"रित्यन्तस्य च ग्रन्थसन्दर्भस्य दर्शनेन गङ्गेशोपाध्यायमतेऽपि ब्रह्मण्यानन्दवत्ताबोधकागमस्य दुःखाभावपरतयैवोपपत्तिः । तदुक्तं मुक्तावलीकारैरपि,—

"ईश्वरोऽपि न ज्ञानसुखात्मा किन्तु ज्ञानाद्याश्रयः। "नित्यं विज्ञानमानन्दं ब्रह्म"त्यादौ ..........आनन्दमित्यस्याप्यानन्दवदित्यर्थः, अर्श आदित्वान्मत्वर्थीयाच्प्रत्ययात्। अन्यथा पुंलिङ्गत्वापत्तिः। आनन्दोऽपि दुःखाभाव उपचर्य्यते ..।"

परन्तु—"अस्तु वा तस्मिन्नानन्दो न त्वसौ आनन्दोऽसुखमिति श्रुते"रित्यस्यापि लेखस्य तत्र विद्यमानत्वादीश्वरे नित्यसुखवत्त्वं न खलु नानुमतं **मुक्तावलीकाराणाम्**। अत एव च गुणनिरूपणे,—"विष्णुप्रीत्यादौ तदसम्भवात्, जन्यसुखादेस्तत्राभावा"दिति तेषां ग्रन्थोऽपि सूपपन्नः।

**आत्मतत्त्वविवेकदीधितौ** तार्किकशिरोमणिरघुनाथैरपि "परमात्मनि तु... विज्ञानमानन्दं ब्रह्म" "आनन्दं ब्रह्मे"त्यादिकाः श्रुतयो मुख्यार्थाबाधान्नित्यज्ञानानन्दं बोधयन्ति, तत्र च न विप्रतिपद्यामह" इति स्वहस्तिततया तेषां मतेऽपीश्वरे नित्यसुखसत्त्वं नाप्रामाणिकम्। अत एव तैः सर्वस्मिन्नेव ग्रन्थे—

"अखण्डानन्दबोधाय पूर्णाय परमात्मने ॥"

इत्येवंरूपं मङ्गलाचरणमनुष्ठितम्। एवञ्च **जगदीशतर्कालङ्कारैरनुमितिमणिदीधितिव्याख्यानावसरे**—

"अखण्डौ नित्यौ आनन्दबोधौ यस्य तस्मै। न च सुखत्वावच्छेदेन पुण्यजन्यतया नित्यसुखासम्भवः, श्रुतिवाक्येभ्यो नित्यसुखसिद्धौ सुखत्वावान्तरजातेरेव पुण्यजन्यतावच्छेदकत्वकल्पनात्।" इति युक्तमुक्तम्।

**पदार्थतत्त्वनिरूपणे**—"ईश्वरस्य च परिमाणवत्त्वे मानाभाव" इत्यादिग्रन्थेन रघुनाथैरीश्वरे परिमाणवत्त्वं निराकृतम्। तत्रैव तैः खण्डितं पृथक्त्वस्य गुणान्तरत्वमपि। तथा च तन्मते संख्यासंयोगविभागा बुद्धीच्छाप्रयत्ना नित्यसुखञ्चेति सप्तैव गुणाः सन्ति परमेश्वर इति प्रतीयते।

"न च........ईश्वरः परममहानित्यादिव्यवहारस्य सकलास्तिकसम्प्रदायसम्मततया परमेश्वरे परममहत्त्वं दुरपह्नवमेवेति वाच्यम्, परोपकारिमनुजेषु महत्त्वव्यवहारवत् परमकारुणिके परमेश्वरे परममहत्त्वव्यवहारस्यार्थान्तरविषयकत्वेनोपपत्तेः, भगवानपरिमेय इत्यादिरूपस्य तद्विरोधिव्यवहारस्य जागरूकत्वाच्च।"—इति **तत्त्वसारे** गुरुचरणाः।

ईश्वरेच्छाविशेषस्य जन्यत्वमपि केषाञ्चिदभिमतम्। तदुक्तं **न्यायमञ्जर्याम्**—

"ननु ज्ञानानन्दवदिच्छाऽपि नित्या चेदीश्वरस्य तर्हि सर्वदा तदिच्छासम्भवात् जगदुत्पत्तिरिति जगदानन्त्यप्रसङ्गः। सर्गेच्छानित्यत्वाच्च संहारो न प्राप्नोति। संहारेच्छाया अपि नित्यत्वाभ्युपगमेन नक्तन्दिनं प्रलयप्रबन्धो न विरमेदेव जगतामिति। नैष दोषः। अनात्ममनःसंयोगजत्वादिच्छा स्वरूपमात्रेण नित्यापि कदाचित् सर्गेण कदाचित् संहारेण वा विषयेणानुरज्यते सर्गसंहारयोरन्तराले तु जगतः स्थित्यवस्थायामस्मात् कर्म्मण इदमस्य सम्पद्यतामितीच्छा भवति प्रजापतेः।" इति।

जीवस्य लक्षणमाह—जीवेति । सुखादिकं जीवलक्षणम् । ननु (१७) 'मनुष्योऽहं ब्राह्मणोऽहम्' इत्यादौ सर्वत्राहम्प्रत्यये शरीरस्यैव विषयत्वाच्छरीरमेवात्मेति चेन्न, शरीरस्य करपादादिनाशे शरीरनाशादा-

(१७) देहात्मवादी चार्वाकः शङ्कते—नन्विति । तेषामयमाशयः—यथा गुडद्राक्षादयः प्रागसतीमपि मदशक्तिमासादितसुराकारपरिणामाः प्रपद्यन्ते, तथा मृदाद्यवस्थायामचेतनान्यपि भूम्यादिभूतानि शरीराकारपरिणतानि चैतन्यं प्राप्नुवन्ति । अत एव समकालीनयावच्छरीरान्यूनानतिरिक्तजीवानां कल्पनापेक्षया देहेष्वेव जीवत्वं कल्पनीयं लाघवात् । तथा च सुखदुःखादयोऽपि शरीरेष्वेव वर्त्तन्ते । 'मम देहोऽय' मिति प्रतीतिः, 'राहोः शिर' इतिवदभेदेऽपि आरोपितभेदावगाहितयोपपद्यते । बाल्ययौवनादिदशाभेदेन शरीरस्य भिन्नत्वं नाङ्गीक्रियते, प्रमाणाभावात् । ह्रस्वत्वमहत्त्वादिरूपपरिमाणवैलक्षण्यमेव शरीरभेदं साधयेदित्यपि न साम्प्रतम्, परिमाणवैलक्षण्यस्य कार्य्यवैलक्षण्यप्रयोजकत्वे प्रत्येकधान्यादिपरिमाणतो विलक्षणपरिमाणविशिष्टत्वेन प्रतीयमानानां तत्पुञ्जानां कार्य्यान्तरतापत्तेः । राशेः कार्यान्तरत्वस्य सर्वैरेवास्वीकृतत्वात् । एवं च सर्व्वदशायामपि शरीरस्यैक्यादेव पितृजन्यत्वे सति पुंस्त्वादिलक्षणात्मजत्वादिकं युवादिशरीरेष्वपि सर्वजनव्यवहृतं न विरुध्येत । गर्भस्थशरीरात् तेषां पार्थक्ये तेषु पितृजन्यत्वाभावेनात्मजत्वव्यवहारो नोपपद्येत । यदि च तज्जन्यवृत्तिरपरजातिरेव तज्जन्यताव्यवहारनियामिकेति पितृजन्यशरीरवृत्तिचैत्रत्वादिरूपतादृशजातिमुपादाय युवशरीरादावपि आत्मजत्वव्यवहारो नानुपपन्न इत्युच्यते, तदा तुल्यन्यायेन घटत्वादिरूपापरजातिमादायापि यावद्घटेष्वेककुलालकर्तृकत्वं न विरुध्येत । तथा च "नान्यदृष्टं स्मरत्यन्यो नैकं भूतमपक्रमा"दित्यादिदोषावतारः सुदूर एव पराहतः ।

अत्राहुः—"यथा मदिरावयवेषु प्रत्येकमेव मदशक्तिरस्ति, न पुनः समुदायमात्रसमवायिनी, एवं शरीरावयवेष्वपि प्रत्येकमेव चैतन्येन भवितव्यम् । न च वैयात्यात् कायसमुदायाश्रयमेव चैतन्यं नावयवाश्रयमिति शक्यमास्थातुम्, त्रिचतुरावयवच्छेदेऽपि चैतन्योपलम्भात् । तस्मादवयवानां प्रत्येकं चैतन्ये शरीर एकस्मिन् बहवश्चेतनाः स्युः । भवतु किं नो बाध्यत इति चेत्, न, विरुद्धाभिप्रायत्वेन स्वतन्त्राणां न किञ्चिदपि कार्य्यं जायते । न च बहूनामेकाभिप्रायनियमो दृष्टः । काकतालीयन्यायेन स्यादेकाभिप्रायत्वं न पुनरस्य नियमो दृष्टचर इति ।" [न्यायवार्तिकतात्पर्य्यटीकायां वाचस्पतिमिश्राः ।]

युवशरीरादावात्मजत्वव्यवहारस्तु निषेकावधिकमामरणाच्छरीरारम्भकसंयोगपर्य्यन्तमात्मजे पितुर्व्यापार इत्यङ्गीकारेणैवोपपादनीय । अत एव 'भ्रम्यादिकपालद्वय-

त्मनोऽपि नाशापत्तेः । नापि इन्द्रियाणामात्मत्वम् । तथात्वे 'योऽहं घटमद्राक्षं सोऽहमिदानीं स्पृशामि' इत्यनुसन्धानाभावप्रसङ्गात् । अन्यानुभूतेऽन्यस्यानुसन्धानायोगात् । तस्माद्देहेन्द्रियव्यतिरिक्तो जीवः (१८)

---

संयोगरूपासमवायिकारणपर्य्यन्तं घटरूपकार्ये दण्डस्य व्यापार' इति तर्कग्रन्थे जगदीशभट्टाचार्य्यैः प्रतिपादितम् । एवं च ज्वलनादिकं सम्पादयतो देवदत्तादेर्दैवादपाये कतिपयकालोत्तरमोदननिष्पत्तावपि देवदत्तादौ पाचकत्वव्यवहारः सूपपादः ।

(१८) महर्षिरक्षपादस्तु निजगाद देहेन्द्रियादिव्यतिरिक्तनित्यजीवसिद्धये— "पूर्व्वाभ्यस्तस्मृत्यनुबन्धाज्जातस्य हर्षभयशोकसम्प्रतिपत्ते" (३।१।१९) रित्यादि सूत्राण्यपि। तेषामयमर्थः—सद्योजातस्य बालस्य स्मितरुदितादिनाऽनुमीयन्ते हर्षभयशोकाः। ते च सुखसाधनाधिगम-तदनुस्मरणान्यतरकारणका एव भवितुमर्हन्ति तथैव दृष्टत्वात् । इह चास्य सुखदुःखसाधनानुभवस्तदानीं नास्तीति तदनुस्मरणमेव हर्षभयशोकनिदानं स्यात् । स्मरणमपि तदनुभवप्रभवमनुभवश्चेह जन्मनि सद्योजातस्य न समस्तीति जन्मान्तरानुभवसुखदुःखसाधनानुस्मरणनिमित्तक एवास्य हर्षभयशोकसमुत्पाद इति जन्मान्तरानुगमान्नित्य आत्मा ।

ननु शिशोर्जन्मान्तरानुभूतस्मरणे सर्व्वदा सर्व्वस्मरणप्रसङ्ग इति चेन्न, कल्पनायाः फलानुसारित्वात् यावत् कार्य्यं कारणकल्पनान्न सर्वदा सर्व्वस्मरणं प्रसज्येत । न च तत्कल्पनायां किमपि कारणमुपलभ्यते, न त्वेकदर्शनात् सर्व्वं कल्प्यं दृष्टमपि वा निह्नोतव्यं परीक्षकैः । अपि च जातिस्मराश्च केचिद्यत्वेऽपि देहान्तरवृत्तं प्रकाशयन्तः समुपलभ्यन्ते । एवञ्च पयसस्तृप्तिहेतुत्वमनुस्मरन् बालः स्तन्याभिलाषेण मातुः स्तनतटे दृष्टिं निदधाति । स्तन्यपानप्रवृत्तिस्तु इष्टसाधनताज्ञानमन्तरेण न सम्भवन्ती जन्मान्तरानुभूतेष्टसाधनत्वस्य तदानीं स्मरणादेव सूपपद्यते ।

स्यादेतत्—अस्तु तर्हि मन एव ज्ञानादेरधिष्ठानं तस्य च नित्यतया न कोऽपि दोष इति कृतमतिरिक्तात्मकल्पनेन । अत्रोक्तं सूत्रकृद्भिः—"ज्ञातुर्ज्ञानसाधनोपपत्तेः संज्ञाभेदमात्रम्"—(न्यायसूत्रम् ३।१।१७) यथा ज्ञातारमभ्युपगच्छता ज्ञानसाधनानि चक्षुरादीनि प्रतिपद्यन्ते तथा मन्तारं प्रतिपद्यमानेन मतिसाधनमभ्युपेयम् । यच्च तन्मतिसाधनं तन्मन इति संज्ञाभेदमात्रे पर्यवसानं स्यात् । तदुक्तं पक्षिलस्वामिना—"ज्ञातर्यात्मसंज्ञा न मृष्यते मतिसाधनं त्वभ्युपज्ञायते । वदितं संज्ञाभेदमात्रं नार्थे विवाद इति ।"

अयमभिसन्धिः—मनसो ज्ञानाद्याश्रयत्वस्वीकारेऽपि रूपादिज्ञानेषु व्याप्तिदर्शनादपरोक्षावभासस्येन्द्रियाधीनतया सुखादिविषयकमपरोक्षज्ञानमिन्द्रियजन्यं

सुखादिवैचित्र्यात् प्रतिशरीरं भिन्नः। स च न परमाणुपरिमाणः शरीरव्यापिसुखाद्यनुपलब्धिप्रसङ्गात्। न मध्यमपरिमाणः, तथा सति अनित्यत्वप्रसङ्गेन कृतहानाकृताभ्यागमप्रसङ्गात्। तस्मान्नित्यो विभुर्जीवः।

---

जन्यापरोक्षज्ञानत्वादित्यनुमानेन चक्षुरादिविविक्तं किमपीन्द्रियं व्यवतिष्ठते। तत्संयुक्ततयैव चक्षुरादिकं चाक्षुषाद्युपधायकम्, अन्यथा चक्षुःसन्निकृष्टस्य त्वगादिसन्निकर्षे चाक्षुषत्वाचादेर्युगपदुत्पादप्रसङ्गः स्यात्। तस्य महत्त्वे चक्षुषि त्वचि च युगपत् संयोगसम्भवेन तद्दोषतादवस्थ्यमिति तस्याणुत्वमपि स्वीकरणीयम्। एवं च क्व लाघवम्? केवलं नामभेदमात्रस्यैवावसीयमानत्वात्।

यदि च ज्ञानाश्रयतया सिद्धं मनो नापेक्षते करणान्तरमित्युच्यते, तदा रूपरसादिष्विन्द्रियसम्बद्धेषु युगपदालोचनानि प्रसज्यन्ते, सामग्रीसान्निध्यात्। अत एवोक्तं **प्रशस्तपादैः**—"नापि मनसः, कारणान्तरानपेक्षित्वे युगपदालोचनस्मृतिप्रसङ्गात्।"

ननु कर्तृत्वं करणत्वं चोभयमेवास्तु मनस इत्यपि नाशङ्कनीयम्। तथा सति मनसोऽणुत्वेनैकदा करचरणयोः संयोगासम्भवादेकदा करावच्छेदेन सुखस्य पादावच्छेदेन दुःखस्यानुत्पादः स्यात्। न हि सुखदुःखयोर्यौगपद्यमनुभवविरुद्धम्। तदुक्तं **प्रत्यक्षखण्डे** चिन्तामणिकारैः—"नानावच्छेदेनैकदा चन्दनदहनादिसम्बन्धे सुखदुःखयोश्चैकदाऽनुभवसिद्धत्वेनेष्टापादनात्। न च तद्यौगपद्यप्रत्ययो भ्रम, बाधकाभावात्।" इति।

किञ्च ज्ञानाद्याश्रयस्याणुत्वे सहसैव चिरप्रोषितागतदयितजनसन्दर्शनसुखोद्भूतसकलशरीरव्यापिस्वेदरोमाञ्चादिदर्शनं विरुध्यते। न हि सम्भवत्यणुपरिमाणविशिष्टस्य मनसः शिरःप्रभृतिसर्वगात्रेषु युगपत् सम्बन्धः। अपि च शरीराद्यधिष्ठातुरणुत्वे एकदा वामदक्षिणकरचरणाधिष्ठानासम्भवेन तेषां युगपत् सञ्चालनादिक्रियानुपपत्तिर्गीर्वाणशापशतेनाप्यपह्नस्तयितुमशक्या स्यात्।

एवं तत्त्वज्ञानिनां कायव्यूहसम्पादनेन युगपदेव बहुषु शरीरेषु कर्मफलोपभोगोऽणुपरिमाणमनसो भोगाश्रयत्वकल्पने विरुध्येत। कमलदलभेदनवत् तत्कालभेदानुमाने कायव्यूहकरणस्यैवानर्थक्यं स्यात्, एकस्मिन्नेव शरीरे कालभेदेन भोगसम्भवात्।

आस्तिकास्तु—

"आत्मानं रथिनं विद्धि शरीरं रथमेव तु।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च॥

**सुखाद्युपलब्धिसाधनमिन्द्रियं मनः। तच्च प्रत्यात्मनियतत्वादनन्तं परमाणुरूपं नित्यं च ॥१७॥**

मनसो लक्षणमाह—सुखेति। स्पर्शरहितत्वे सति क्रियावत्त्वं मनसो लक्षणम्। मनो विभजते—तच्चेति। एकैकस्यात्मन एकैकं मन आवश्यकमित्यात्मनामनेकत्वान्मनसामप्यनेकत्वमित्यर्थः। परमाणुरूपमिति। मध्यमपरिमाणवत्त्वे अनित्यत्वप्रसङ्गादित्यर्थः। ननु मनो विभु स्पर्शरहितद्रव्यत्वात् आकाशादिवदिति चेन्न (१९), मनसो विभुत्वे आत्ममनःसंयोगस्याऽसमवायिकारणस्याभावाज्ज्ञानानुत्पत्तिप्रसङ्गात्। न च विभुद्वयसंयोगोऽस्त्विति वाच्यम्, तत्संयोगस्य नित्यत्वेन सुषुप्त्यभावप्रसङ्गात् पुरीतद्व्यतिरिक्तप्रदेशात्ममनःसंयोगस्य सर्वदा विद्यमानत्वात्। अणुत्वे तु यदा मनः

### न्यायबोधिनी

**मनो निरूपयति—सुखादीति। उपलब्धिर्नाम साक्षात्कारः। तथा च सुखदुःखादिसाक्षात्कारकारणत्वे सति इन्द्रियत्वं मनसो लक्षणम्। इन्द्रियत्वमात्रोक्तौ चक्षुरादावतिव्याप्तिः। अतः सुखादिसाक्षात्कारकारणत्वविशेषणम्। विशेष्यानुपादाने आत्मन्यतिव्याप्तिः, आत्मनः सुखादिकं प्रति समवायिकारणत्वात्; अत इन्द्रियत्वरूपविशेष्योपादानम् ॥ १७ ॥**

---

मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः।"

( कठोपनिषद्, ३।३-१० )

इत्यादिश्रुतिप्रामाण्यादात्ममनसोरैक्यं भावयितुमपि बिभ्यति।

"मनोऽपि न तथा ज्ञानाद्यनध्यक्षं तदा भवे"दिति **भाषापरिच्छेद**ग्रन्थश्चिन्त्यः। यतः "महत्यनेकद्रव्यवत्त्वात् रूपाच्चोपलब्धिः"-( ४।१।६ ) इति **वैशेषिकसूत्रे** महत्त्वादेर्बहिरिन्द्रियजन्यप्रत्यक्ष एव कारणत्वं प्रतिपादितम्। अन्यथाऽतिरिक्तात्मस्वीकारेऽपि अनेकद्रव्यवत्ताऽभावाद् रूपाभावाच्चात्मनस्तन्निष्ठज्ञानादिगुणानाञ्च मानसप्रत्यक्षं न स्यात्। अत एवोक्तमु**पस्कारकृद्भिः**-"उपलब्धिरिति बहिरिन्द्रियेणेति शेषः।"

(१९) कौमारिलास्तु मनसो विभुत्वमङ्गीकुर्वन्ति। तथा च **मानमेयोदये**—'मनो विभु स्पर्शानर्हद्रव्यत्वाद् अनारभ्यारम्भकद्रव्यत्वाद् वा ज्ञानासमवायिकारणसंयोगाधारत्वाद् वा आत्मवद् इत्यादिभिरनुमानैर्महत्त्वसिद्धेः।"—( ८९ पृ० )

पुरीतति नाड्यां प्रविशति, तदा सुषुप्तिः, यदा निःसरति, तदा ज्ञानोत्पत्तिरित्यणुत्वसिद्धिः (२०)

**चक्षुर्मात्रग्राह्यो गुणो रूपम्। तच्च शुक्लनीलपीतरक्तहरित-**

रूपं लक्षयति—चक्षुरिति। संख्यादावतिव्याप्तिवारणाय मात्रपदम्। रूपत्वेऽतिव्याप्तिवारणाय गुणपदम्। रूपं विभजते—तच्चेति। नन्वव्याप्यवृत्तिनीलादिसमुदाय एव चित्ररूपमिति चेत्, न, रूपस्य व्याप्यवृत्ति-

### न्यायबोधिनी

रूपं लक्षयति—चक्षुरिति। चक्षुर्मात्रग्राह्यत्वविशिष्टगुणत्वं रूपस्य लक्षणम्। विशेष्यमात्रोपादाने रसादावतिव्याप्तिः, अतश्चक्षुर्मात्रग्राह्यत्वविशेषणम्। तावन्मात्रोपादाने रूपत्वेऽतिव्याप्तिः—यो गुणो यदिन्द्रियग्राह्यस्तन्निष्ठा जातिस्तदिन्द्रियग्राह्येति नियमात्तद्वारणाय विशेष्योपादानम्। चक्षुर्मात्रग्राह्यत्वं नाम चक्षुर्भिन्नेन्द्रियाग्राह्यत्वे सति चक्षुर्ग्राह्यत्वम्। मात्रपदानुपादाने संख्यादिसामान्यगुणेऽतिव्याप्तिः, तत्रापि चक्षुर्ग्राह्यत्वविशिष्टगुणत्वस्य सत्त्वात्, अतस्तद्वारणाय मात्रपदम्, संख्यादेश्चक्षुर्भिन्नत्वगिन्द्रियग्राह्यत्वाच्चक्षुर्मात्रग्राह्यत्वं नास्ति। अतीन्द्रियगुरुत्वादावतिव्याप्तिवारणाय चक्षुर्ग्राह्येति।

---

(२०) मनसो विभुत्वे सर्व्वेन्द्रियसन्निकृष्टान्मनसः सर्व्वेन्द्रियकमेकमेव ज्ञानमुत्पद्यते। कार्य्यविरोधान्नैवमिति चेत्, न तावत् सामग्री विरोधाविरोधमाकलयति, येन चाक्षुषत्वरासनत्वादिविरोधाय विरम्येत्। चित्ररूपवत् चित्राकारमेव वा स्यात्। किञ्च मनोवैभवे पादे मे सुखं शिरसि मे वेदनेति प्रादेशिकत्वं सुखादीनां न स्यात्, विभुकार्याणामसमवायिकारणावच्छिन्नदेशे उत्पादनियमात्। इत्यादिकमपि दूषणमूहनीयम्। न च वैभवानुमानस्य का गतिरिति शङ्क्यम्, हेतूनां धर्म्मिग्राहकमानबाधितत्वात्। एवञ्च सत्यामपि श्रावणप्रत्यक्षसामग्र्यां चक्षुर्मनोयोगदशायां चाक्षुषमेव भवति, न श्रावणादिकमिति तन्नियामकतयाऽवश्यमणु मनः स्वीकरणीयम्। तथा च मनसोऽणुत्वेनैव द्वाभ्यामिन्द्रियाभ्यामेकदा नोत्पद्यते संयोगः। "चञ्चलं हि मनः कृष्ण प्रमाथि बलवद् दृढम्।" इत्यादिपरमर्षिवाक्येनाप्यविभुत्वमेव मनसः प्रतिपाद्यते। तस्य विभुत्वे तत्र चाञ्चल्यरूपक्रियावत्त्वमसम्भवदुक्तिकं स्यात्, विभूनां निष्क्रियत्वात्। वैद्यकशास्त्रमतेऽपि मनसोऽणुत्वमेव। तदुक्तं चक्रपाणिना **चरकतात्पर्य्ये**—"अत एव हि कारणान्महत्त्वमपि मनसो नास्ति ... तस्मादेकमणु च मन इति।"—( सूत्रस्थानम्, ८।५ )

कपिशचित्रभेदात् सप्तविधम् (२१) पृथिवीजलतेजोवृत्ति। तत्र पृथिव्यां सप्तविधम्। अभास्वरशुक्लं जले। भास्वरशुक्लं तेजसि ॥१८॥

न्यायबोधिनी

अत्र लक्षणे ग्राह्यत्वं नाम प्रत्यक्षविषयत्वम्। अग्राह्यत्वं नाम तदविषयत्वम्। तथा च चक्षुर्भिन्नेन्द्रियजन्यप्रत्यक्षाविषयत्वे सति चक्षुर्जन्यप्रत्यक्षविषयत्वमिति फलितोऽर्थः। ननु प्रभाघटसंयोगे रूपलक्षणस्यातिव्याप्तिस्तस्य चक्षुर्मात्रग्राह्यगुणत्वादिति चेन्न, गुणपदस्य विशेषगुणपरत्वात्। न चैवं विशेषगुणत्वघटितलक्षणे संख्यादावतिव्याप्त्यभावान्मात्रपदवैयर्थ्यमिति वाच्यम्, जलमात्रवृत्तिसांसिद्धिकद्रवत्वादावतिव्याप्तिवारणाय तदुपादानात्। अथ वा चक्षुर्मात्रग्राह्यजातिमद्गुणत्वस्य लक्षणत्वान्न प्रभाघटसंयोगादावतिव्याप्तिः, संयोगत्वजातेश्चक्षुर्मात्रग्राह्यत्वाभावात्। घटपटसंयोगस्य त्वगिन्द्रियग्राह्यत्वात्तद्गतजातेरपि त्वगिन्द्रियग्राह्यत्वात्। (यो गुणो यदिन्द्रियग्राह्यस्तन्निष्ठजातेरपि तदिन्द्रियग्राह्यत्वात्।) अत्र जातिघटितलक्षणे गुणत्वानुपादाने चक्षुर्मात्रग्राह्यजातिमति सुवर्णादावतिव्याप्तिरतस्तद्वारणाय तदुपादानम्। एवं रसादिलक्षणे विशेषणानुपादाने लक्ष्यभिन्नगुणादावतिव्याप्तिः। विशेष्यानुपादाने लक्ष्यमात्रवृत्तिरसत्वगन्धत्वादावतिव्याप्तिः। अतो विशेषणविशेष्ययोरुपादानम् ॥ १८ ॥

(२१) रूपविभागे च नानामतान्युपलभ्यन्ते। न्यायवैशेषिकयोः प्राचीननिबन्धकारैर्विशिष्य न प्रतिपादिता धर्मिणो रूपत्वावान्तरधर्म्मपुरस्कारेण। तथा च भाष्यकारैरभिभाषितं—"तत्र रूपं..... शुक्लाद्यनेकप्रकारम्।" इति। एतद्भाष्यव्याख्यानावसरे कन्दलीकारैः किरणावलीकारैर्वा तत्प्रकारा न प्रदर्शिताः। परन्तु पृथिवीनिरूपणप्रस्तावे 'शुक्लपीताद्यनेकविधं रूपं 'श्यामशुक्लहरितादीनि' 'चित्ररूपस्यावयविनः' इत्यादिकन्दलीग्रन्थसन्दर्शनेन शुक्लपीतश्यामहरितचित्रभेदा आदिपदाद् रक्तकपिशभेदाश्च रूपाणां श्रीधराचार्य्यानुमता इति प्रतिभाति।

मुक्तावलीकारैरपि—"तच्छुक्लनीलपीतरक्तकृष्णकर्बुरादिभेदादनेकप्रकारकं भवती"त्यत्रादिपदमुपन्यस्तम्। तर्ककौमुदीकृतस्तु—"तच्छुक्लकृष्णपीतरक्तहरितकपिलभेदात् षड्विध"मित्युक्त्या चित्ररूपादिस्वीकारमनादृत्य रूपस्य षाड्विध्यमेव प्रत्यपादयन्। "वर्णाः पञ्चधा नीलपीतशुक्लकृष्णलोहितभेदा" दित्यार्हतमतम्। तेषां च मते रसोऽपि पञ्चविधः। तथा च्याकलङ्कदेवः

त्वनियमात् । ननु चित्रपटे अवयवरूपस्य प्रतीतिरस्त्विति चेत्, न, रूपरहितत्वेन पटस्याप्रत्यक्षत्वप्रसङ्गात् (२२) न च रूपवत्समवेतत्वं प्रत्यक्षत्वप्रयोजकम्, गौरवात् । तस्मात् पटस्य प्रत्यक्षत्वानुपपत्त्या चित्ररूपसिद्धिः । रूपस्याश्रयमाह—पृथिवीति । आश्रयं विभज्य दर्शयति—तत्रेति ।

**रसनग्राह्यो गुणो रसः । स च मधुराम्ललवणकटुकषायतिक्तभेदात् षड्विधः । पृथिवीजलवृत्तिः । पृथिव्यां षड्विधः । जले मधुर एव ॥ १९ ॥**

रसं लक्षयति—रसनेति । रसत्वेऽतिव्याप्तिवारणाय गुणपदम् । रसस्याश्रयमाह–पृथिवीति । आश्रयं विभज्य दर्शयति–पृथिव्यामिति ।

**घ्राणग्राह्यो गुणो गन्धः । स च द्विविधः सुरभिरसुरभिश्च । पृथिवीमात्रवृत्तिः ॥२०॥**

गन्धं लक्षयति—घ्राणेति । गन्धत्वेऽतिव्याप्तिवारणाय गुणपदम् ।

**त्वगिन्द्रियमात्रग्राह्यो गुणः स्पर्शः । स त्रिविधः शीतोष्णानुष्णाशीतभेदात् । पृथिवीजलतेजोवायुवृत्तिः । तत्र शीतो जले उष्णस्तेजसि अनुष्णाशीतः पृथिवीवाय्वोः ॥२१॥**

स्पर्शं लक्षयति–त्वगिति । स्पर्शत्वेऽतिव्याप्तिवारणाय गुणपदम् । संयोगादावतिव्याप्तिवारणाय मात्रपदम् ।

---

"तिक्तकटुकाम्लमधुरकषाया रसप्रकाराः ।" स्पर्शानामपि "मृदुकठिनगुरुलघुशीतोष्णस्निग्धरूक्षस्पर्शभेदा" इत्यष्टविधत्वमेव **तत्त्वार्थराजवार्त्तिके** प्रतिपादितम् । कौण्डभट्टास्तु **पदार्थदीपिकायां** स्पर्शः कोमलकठिनचित्रभेदादनेकधा ।" इत्याहुः ।

भट्टमते रूपं तावत् पञ्चविधम् । तदाहुर्मानमेयोदये–"तच्च शुक्लकृष्णपीतरक्तश्यामभेदेन पञ्चविधम् ।" इति (१०० पृ०) परन्तु "एतेषामवान्तरभेदाः पुनरसङ्ख्या" इत्यग्रिमग्रन्थेन शुक्लत्वादिव्याप्यजातेरसङ्ख्यत्वमेव तैरङ्गीकृतम् । तेषां मते गन्धस्यापि त्रैविध्यम् । तदुक्तं तत्रैव—"स च सुगन्धदुर्गन्धसाधारणगन्धभेदेन त्रिविध" इति ।

(२२) नन्ववयवरूपाणि समुच्चितान्यत्र चित्रधिया प्रतीयन्ते तेनैव पटस्य प्रत्यक्षमन्यदीयरूपेणापि धर्मिणो ग्रहसम्भवात् शङ्खस्येव पित्तपीतिम्नेति चेदन्यत्रापि तथाकल्पनसम्भवेनावयविमात्ररूपोच्छेदः प्रसज्येत ।

रूपादिचतुष्टयं पृथिव्यां पाकजमनित्यं च (२३)। अन्यत्रा-

न्यायबोधिनी

स्पर्शं लक्षयति—त्वगिन्द्रियमात्रग्राह्य इति। अत्रापि मात्रपदं संख्यादिसामान्यगुणादावतिव्याप्तिवारणाय। अन्यविशेषणकृत्यं पूर्ववद्बोध्यम्। ग्राह्यत्वपदार्थोऽपि पूर्ववदेव प्रत्यक्षविषयत्वरूप एव बोध्यः॥ २१॥

(२३) ननु संख्यापरिमाणादीनामिव स्पर्शस्यापि पाकाद्वैलक्षण्यं न प्रतीयत इति रूपादिवत् स्पर्शस्यापि पाकजत्वकथनं

"कुम्भकर्णे भकारोऽस्ति भकारोऽस्ति विभीषणे।
कथं ज्येष्ठे कुलश्रेष्ठे भकारो नास्ति रावणे॥"

इति न्यायं किं नानुधावति? इति चेदत्राहुः—

"अप्रतीयमानपाकजेषु स्तम्भादिषु स्पर्शस्य पाकजत्वमनुमानात्। स्तम्भादिषु स्पर्शः पाकजः पार्थिवस्पर्शत्वाद् घटादिस्पर्शवत्। घटादिस्पर्शस्यापि पाकजत्वमेकेन्द्रियग्राह्यत्वे सति तद्गुणत्वात् तद्गतरूपवत्।" इति **न्यायकन्दलीकाराः**।

**किरणावलीकृतस्तु**—"यदि हि पाकजो न स्यात् संख्यापरिमाणादिवद् विशिष्टः स्यात्। तथा चाशीविषवृश्चिककीटादिदंशेषु शूकशिम्बिवृश्चिकपत्रिकादिषु संस्पृष्टेषु दुःखविशेषो नोपपद्येत। मणिमूलादिविषेषु स्पृष्टेषु तदुपशमो न स्यात्। गवादिचाण्डालादिस्पर्शविधिनिषेधौ च न स्याताम्। न च द्रव्यमात्रे तावुपपद्येते। दर्शनस्पर्शनघ्राणास्वादनभेदेन मातङ्गमदिरादिषु प्रायश्चित्तभेदानुपपत्तिप्रसङ्गात्। तस्मात् पार्थिवस्पर्शोऽपि पाकजः पार्थिवविशेषगुणत्वाद् गन्धवदित्यवधेयम्।" इत्याहुः।

अत्रोक्तं कौण्डभट्टैः **पदार्थदीपिकायाम्**,—

"ननु स्पर्शस्य पाकजत्वे किं मानम्। न हि रूपरसादिवत् पाकोत्तरं स्पर्शान्तरमनुभूयते। न च चाण्डालस्पर्शनिषेधगोब्राह्मणस्पर्शविध्यनुपपत्त्या तत्सिद्धिरित्याचार्यैरुक्तम्। तत्र स्पर्शपदस्य संयोगपरत्वात्। अन्यथा गङ्गास्पर्शविधिकर्मनाशाजलस्पर्शनिषेधानुरोधाज्जलेऽपि दीपाग्निस्पर्शनिषेधपरमेश्वरार्त्तिक्यदीपस्पर्शविधेरनुरोधात् तेजसि तत्सिद्ध्यापत्तेरिति चेन्न, पूर्वं कठिनस्य पाकेन कोमलताया पूर्वं कोमलस्य पाकेन काठिन्यस्य वाऽनुभवसिद्धत्वेन रूपादिवत् पाकजत्वसिद्धेः। न च काठिन्यकोमलत्वे संयोगविशेषौ, चाक्षुषत्वापत्तेः।" इति।

पाकजं नित्यमनित्यं च। नित्यगतं नित्यमनित्यगतमनित्यम्॥२२॥

पाकजमिति। पाकस्तेजःसंयोगः, तेन पूर्वरूपं नश्यति रूपान्तरमुत्पद्यते इत्यर्थः। अत्र परमाणुष्वेव पाको न द्व्यणुकादौ। आमपाकनिक्षिप्ते घटे परमाणुषु रूपान्तरोत्पत्तौ श्यामघटनाशे पुनर्द्व्यणुकादिक्रमेण रक्तघटोत्पत्तिः। तत्र परमाणवः समवायिकारणम्, तेजःसंयोगोऽसमवायिकारणम्, अदृष्टादिकं निमित्तकारणम्, द्व्यणुकादिरूपे कारणरूपमसमवायिकारणमिति पीलुपाकवादिनो वैशेषिकाः। पूर्वघटनाशं विनैव अवयविनि अवयवेषु परमाणुपर्यन्तेषु च युगपद्रूपान्तरोत्पत्तिरिति पिठरपाकवादिनो नैयायिकाः। अत एव पार्थिवपरमाणुरूपादिकमनित्यमित्यर्थः। अन्यत्रेति। जलादावित्यर्थः। नित्यगतमिति। परमाणुगतमित्यर्थः। अनित्यगतमिति। द्व्यणुकादिनिष्ठमित्यर्थः। रूपादिचतुष्टयम् उद्भूतं

## न्यायबोधिनी

रूपादिचतुष्टयमिति। एतत्तत्त्वनिर्णयश्चेत्थम्—पाको नाम विजातीयतेजःसंयोगः। स च नानाजातीयरूपजनको विजातीयस्तेजःसंयोगः। तदपेक्षया रसजनको विजातीयस्तेजःसंयोगः। एवं गन्धजनकोऽपि ततो विजातीय एव। एवं स्पर्शजनकोऽपि तथैव। एवम्प्रकारेण भिन्नभिन्नजातीयाः पाकाः कार्यवैलक्षण्येन कल्पनीयाः। यथा तृणपुञ्जनिक्षिप्त आम्रादौ ऊष्मलक्षणविजातीयतेजःसंयोगात्पूर्वहरितरूपनाशेन रूपान्तरस्य पीतादेरुत्पत्तिर्न तु रसादेरुत्पत्तिः, पूर्वरसस्याम्लस्यैवानुभवात्। क्वचित्पूर्वहरितरूपसत्त्वेऽपि रसपरावृत्तिर्दृश्यते। विजातीयतेजःसंयोगरूपपाकवशात्पूर्वतनाम्लरसनाशेन मधुररसस्यानुभवात्। तस्माद्रूपजनकापेक्षया रसजनको विलक्षण एवाङ्गीकार्यः। एवं गन्धजनको विलक्षण एव। रूपरसयोरपरावृत्तावपि पूर्वगन्धनाशे विजातीयपाकवशात्सुरभिगन्धोपलब्धेः। एवं स्पर्शजनकोऽपि। पाकवशात्कठिनस्पर्शनाशेन मृदुस्पर्शानुभवात्। तस्माद्रूपादिजनका विजातीया एव पाकाः यथाकार्यमुन्नेयाः। अत एव पार्थिवपरमाणूनामेकजातीयत्वेऽपि पाकमहिम्ना विजातीयद्रव्यान्तरानुभवः। यथा गोभुक्ततृणादीनामापरमाण्वन्तभङ्गे तृणारम्भकपरमाणुषु विजातीयतेजःसंयोगात्पूर्वरूपादिचतुष्टयनाशे तदनन्तरं दुग्धे यादृशं रूपादिकं वर्तते तादृशरूपरसगन्धस्पर्शजनकास्तेजः-

प्रत्यक्षम् । अनुद्भूतमप्रत्यक्षम् । उद्भूतत्वं प्रत्यक्षत्वप्रयोजको धर्मः । तदभावोऽनुद्भूतत्वम् (२४) ।

**एकत्वादिव्यवहारहेतुः संख्या । नवद्रव्यवृत्तिः । एकत्वादिपरार्धपर्यन्ता । एकत्वं नित्यमनित्यं च । नित्यगतं नित्यम् । अनित्यगतमनित्यम् । द्वित्वादिकं तु सर्वत्रानित्यमेव ॥२३॥**

संख्यां लक्षयति—एकेति ।

**मानव्यवहारासाधारणं कारणं परिमाणम् । नवद्रव्यवृत्ति । तच्चतुर्विधम्—अणु, महत्, दीर्घं, ह्रस्वं चेति ॥२४॥**

परिमाणं लक्षयति—मानेति । परिमाणं विभजते—तच्चेति । भावप्रधानो निर्देशः । अणुत्वं, महत्त्वं, दीर्घत्वं ह्रस्वत्वं चेत्यर्थः ।

**पृथग्व्यवहारासाधारणं कारणं पृथक्त्वम् (२५) । सर्वद्रव्यवृत्ति ॥२५॥**

न्यायबोधिनी

संयोगा जायन्ते । तदुत्तरं तैरेव तादृशरूपरसादय उत्पद्यन्ते । तादृशरूपरसादिविशिष्टपरमाणुभिर्दुग्धद्व्यणुकमारभ्यते । ततस्त्र्यणुकादिक्रमेण महादुग्धारम्भः । एवं दुग्धारम्भकैः परमाणुभिरेव दध्यारभ्यते । एवं पाकमहिम्ना दध्यारम्भकैरेव परमाणुभिर्नवनीतादिकमिति दिक् ॥२२॥

(२४) 'उद्भूतत्वं जातिः । न च शुक्लत्वादिना साङ्कर्य्यम् । गुणसाङ्कर्य्यं न बाधकम्, इति नवीनमताभिप्रायकोऽयं ग्रन्थ इति न दोष' । इति **नीलकण्ठभट्टाः** । **मुक्तावलीकृतस्तु** 'उद्भूतत्वं न जातिः शुक्लत्वादिना सङ्करात् । न च शुक्लत्वादिव्याप्यं नानैवोद्भूतत्वमिति वाच्यम्, उद्भूतरूपत्वादिना चाक्षुषादौ जनकतानुपपत्तेः किन्तु शुक्लत्वादिव्याप्यमनुद्भूतत्वं नाना तदभावश्चोद्भूतत्वम् ।' इत्याहुः । 'नीलत्वशुक्लत्वादिव्यापकमुद्भूतत्वमेकमेव सामान्यं चाक्षुषप्रयोजकं पिशाचनिदाघोष्मादौ न नीलशुक्लाद्यात्मकं रूपं किन्तु तद्भिन्नमेव, प्रत्यक्षस्य चाक्षुषाद्यन्यतमत्वनियम इव रूपस्य नीलशुक्लाद्यन्यतमत्वनियमे मानाभावा'दिति **सामान्यलक्षणायां जगदीशः** ।

(२५) **प्राभाकरास्तु** कार्य्यद्रव्येषु पृथक्त्वं नानुमन्यन्ते, तदाहुः—

"पृथक्त्वं तु गुणो नित्यद्रव्येषु परमाणुषु ।
भवेद् व्यावर्त्तको धर्मः कार्य्यद्रव्येषु नेष्यते ॥"

पृथक्त्वं लक्षयति—पृथगिति । 'इदमस्मात् पृथक्' इति व्यवहार-कारणमित्यर्थः ।

**संयुक्तव्यवहारहेतुः संयोगः । सर्वद्रव्यवृत्तिः ॥२६॥**

संयोगं लक्षयति–संयुक्तेति । 'इमौ संयुक्तौ' इति व्यवहारहेतुरित्यर्थः (२६) । संख्यादिलक्षणेषु सर्वत्र दिक्कालादावतिव्याप्तिवारणाय असाधारणेति देयम् । संयोगो द्विविधः—कर्मजः संयोगजश्च । आद्यो हस्तक्रियया पुस्तकसंयोगः । द्वितीयो हस्तपुस्तकसंयोगात् कायपुस्तक-संयोगः । अव्याप्यवृत्तिः संयोगः । स्वात्यन्ताभावसमानाधिकरणत्वम्–अव्याप्यवृत्तित्वम् ।

**संयोगनाशको गुणो विभागः । सर्वद्रव्यवृत्तिः ॥२७॥**

विभागं लक्षयति—संयोगेति । कालादावतिव्याप्तिवारणाय—गुण इति । रूपादावतिव्याप्तिवारणाय संयोगनाशक इति । विभागोऽपि

---

**अद्वैतवादिनस्तु**—स्तम्भात् कुम्भो भिन्न इति कुम्भभेदावगमस्य तत्पूर्वभाविस्तम्भभेदावगमनिबन्धनत्वात्, स्तम्भभेदावगमस्य च तत्पूर्वभाविकुम्भभेदावगमाधीनत्वाद् भेदप्रतिपत्तिमेव दुरुपपादां मन्यमानाः "नेह नानास्ति किञ्चन"(बृ० ४।४।१९) इत्यादिवाक्यानां विरोधपरिहाराय पृथक्त्वं नाम गुणान्तरं परमार्थतो नास्तीत्याहुः ।

शिरोमणिभट्टाचार्य्यैरपि **पदार्थतत्त्वनिरूपणे**—"पृथक्त्वमपि न गुणान्तरम् । अन्योन्याभावादेव पृथक्त्वव्यवहारोपपत्तेः । पृथक्त्वप्रतीतिस्तु न सावधित्वालम्बना मानाभावात् । घटात् पटः पृथक् इतरेभ्योऽन्यो भिन्नोऽर्थान्तरमित्यादौ च तच्छब्दविशेषप्रयोगे पञ्चम्यानुशासनकी ।" (२८–२९ पृ०) इतिग्रन्थेन पृथक्त्वस्य गुणान्तरत्वं निराकृतम् ।

(२६) "संयोगविभागद्वित्वद्विपृथक्त्वादयोऽनेकाश्रिता" इतिभाष्यव्याख्यानावसरे **श्रीधराचार्याः**,—"एका संयोगव्यक्तिरेका च विभागव्यक्तिरुभयोर्द्रव्ययोर्वर्त्तते इत्यनेकाश्रितत्वम् ।" इत्याहुः । **मीमांसकमते** च संयोगः प्रत्याश्रयं भिन्नः । तथा च **शास्त्रदीपिकायाम्**,—"अथ संयोगः किमेक एक द्वयोः संयोगिनोः ? उत प्रतिसंयोगि भिन्नावेव संयोगो ? काश्यपीयास्तावत् संयोगमुभयोर्व्यासक्तमेकं मन्यन्ते । वयन्तु यथा इदमनेन सदृशमिदमनेन इति प्रतियोगिनमपेक्ष्य इतरत्र इतरस्यावगम्यमानं सादृश्यं प्रतिधर्म्मि भिन्नं भवति, तथा संयोगस्य तादृशबुद्धिविषयत्वाद् भेदमेव रोचयामहे ।" इति ।

द्विविधः कर्मजो विभागजश्च । आद्यो हस्तक्रियया हस्तपुस्तकविभागः । द्वितीयो हस्तपुस्तकविभागात्कायपुस्तकविभागः ।

परापरव्यवहारासाधारणकारणे परत्वापरत्वे । पृथिव्यादिचतुष्टयमनोवृत्तिनी । ते द्विविधे दिक्कृते कालकृते च । दूरस्थे दिक्कृतं परत्वम् । समीपस्थे दिक्कृतमपरत्वम् । ज्येष्ठे कालकृतं परत्वम् । कनिष्ठे कालकृतमपरत्वम् ॥२८॥

परत्वापरत्वयोर्लक्षणमाह—परापरेति । परव्यवहारकारणं परत्वम् । अपरव्यवहारकारणमपरत्वम् इत्यर्थः । ते विभजते—द्विविधे इति । दिक्कृतयोरुदाहरणमाह—दूरस्थ इति । कालकृते उदाहरति—ज्येष्ठ इति ।

आद्यपतनासमवायिकारणं गुरुत्वम् (२७) । पृथिवीजलवृत्ति ॥ २९ ॥

गुरुत्वं लक्षयति—आद्येति । द्वितीयादिपतनस्य वेगासमवायिकारणत्वाद्वेगेऽतिव्याप्तिवारणाय आद्येति ।

न्यायबोधिनी

विभागं लक्षयति – संयोगेति । संयोगनाशकत्वविशिष्टगुणत्वं विभागस्य लक्षणम् । विशेषणमात्रोपादाने क्रियाया अपि संयोगनाशकत्वात्तत्रातिव्याप्तिस्तद्वारणाय गुणत्वमिति विशेष्योपादानम् ॥२७॥

गुरुत्वं लक्षयति—आद्येति । द्वितीयपतनक्रियायां वेगस्यासम-

(२७) गुरुत्वं न केनचिदिन्द्रियेण गृह्यते । तथा च प्रशस्तपादभाष्यम्,—"गुरुत्वधर्म्माधर्म्मभावना ह्यतीन्द्रियाः ।" न्यायलीलावतीकृतस्तु—अदृष्टसापेक्षेण त्वगिन्द्रियेण पृष्ठाद्यारोपितपदार्थस्य गुरुत्वमुपलभ्यत एव । न च तत्रापि तदुपलब्धिरानुमानिकी भवतीति वक्तुं शक्यम्, तदनुमापकपतनायोगात् । अदृष्टनिरपेक्षेणैव त्वगिन्द्रियेण गुरुत्वमुपलभ्यतामित्यपि न साम्प्रतम्, तर्हि ऊर्द्ध्वावच्छेदेनापि तदुपलब्धिः प्रसज्येत । इति मन्यन्ते । अत एव तेषां ग्रन्थः—"अतो योगीन्द्रियवदिन्द्रियमदृष्टसहायमतीन्द्रियेऽपि गुरुत्वे प्रवर्त्तत इति ।"

ननु पतनहेतुगुरुत्ववत् ज्वलनज्वालाया ऊर्द्ध्वगमननिदानं लघुत्वमपि गुणान्तरं सेत्स्यतीति चेन्न, तत्रोद्गमननियमस्य कारणवेगपूर्व्वकवेगादेवोपपत्तेर्गुणान्तरकल्पनाया अन्याय्यत्वात् । लघुत्वप्रत्ययविषयत्वं च गुरुत्वापकर्ष एव ।

स्यन्दनासमवायिकारणं द्रवत्वम्। पृथिवीजलतेजोवृत्ति। तद् द्विविधम्—सांसिद्धिक नैमित्तिकं चेति। सांसिद्धिकं जले। नैमित्तिकं पृथिवीतेजसोः। पृथिव्यां घृतादावग्निसंयोगजं द्रवत्वम्। तेजसि सुवर्णादौ ॥३०॥

द्रवत्वं लक्षयति—स्यन्दनेति। स्यन्दनं प्रस्रवणम्। तेजःसंयोगजं नैमित्तिकम्। तद्भिन्नं सांसिद्धिकम्। पृथिव्यां नैमित्तिकमुदाहरति—घृतादाविति। तेजसि तदाह—सुवर्णादाविति।

चूर्णादिपिण्डीभावहेतुर्गुणः स्नेहः। जलमात्रवृत्तिः ॥३१॥

स्नेहं लक्षयति—चूर्णेति। कालादावतिव्याप्तिवारणाय गुण इति। रूपादावतिव्याप्तिवारणाय पिण्डीभावेति।

न्यायबोधिनी

वायिकारणत्वात्तत्रातिव्याप्तिवारणायाद्येति। उत्तरत्र स्यन्दने आद्यत्वविशेषणमपि पूर्ववदेव योजनीयम् ॥२६॥

स्नेहं लक्षयति—चूर्णादीति। चूर्णादिपिण्डीभावहेतुत्वे सति गुणत्वं स्नेहस्य लक्षणम्। पिण्डीभावो नाम चूर्णादेर्धारणाकर्षणहेतुभूतो विलक्षणः संयोगः। तादृशसंयोगे स्नेहस्यैवासाधारणकारणत्वं न तु जलादिगतद्रवत्वस्य, तथा सति द्रुतसुवर्णादिसंयोगेन चूर्णादेः पिण्डीभावापत्तेः, अतः स्नेह एवासाधारणं कारणम्। विशेषणमात्रोपादाने कालादावतिव्याप्तिरतस्तद्वारणाय विशेष्योपादानम्। वस्तुतस्तु द्रुतजलसंयोगस्यैव चूर्णादिपिण्डीभावहेतुत्वं स्नेहस्य पिण्डीभावहेतुत्वे मानाभावात्। जले द्रुतत्वविशेषणात्करकादिव्यावृत्तिः ॥३१॥

श्रोत्रग्राह्यो गुणः शब्दः (२८)। आकाशमात्रवृत्तिः। स

(२८) ननु शब्दो द्रव्यम् इन्द्रियसंयोगसमवायान्यतरवेद्यत्वाद्, घटवदित्यनुमानेन शब्दस्य द्रव्यत्वं कथं न सिध्यति ? अत एव महानेकः शब्दो वेगेन दूरं गत इत्यादिसर्वजनव्यवहारोऽपि सूपपद्यते। इति चेन्न, अश्रावणत्वस्योपाधित्वात्। तथा च महत्त्वादिगुणवत्त्वं तत्रैकार्थसमवायसम्बन्धेनैवोपपद्यत इति शब्दो द्रव्यमिति भट्टमतं नादरणीयम्। तदुक्तं शाकुन्तलेऽपि—'श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम्।' इति।

**द्विविधः—ध्वन्यात्मको वर्णात्मकश्चेति । ध्वन्यात्मको भेर्यादौ । वर्णात्मकः संस्कृतभाषादिरूपः ॥३२॥**

शब्दं लक्षयति—श्रोत्रेति ॥ शब्दत्वेऽतिव्याप्तिवारणाय गुण इति । रूपादावतिव्याप्तिवारणाय श्रोत्रेति । शब्दस्त्रिविधः—संयोगजो, विभागजः, शब्दजश्चेति । तत्र आद्यो भेरीदण्डसंयोगजन्यः । द्वितीयो वंशे पाट्यमाने दलद्वयविभागजन्यश्चटचटाशब्दः । भेर्यादिदेशमारभ्य श्रोत्रपर्यन्तद्वितीयादिशब्दाः शब्दजाः ।

**सर्वव्यवहारहेतुर्गुणो बुद्धिर्ज्ञानम् । सा द्विविधा—स्मृतिरनुभवश्च ॥३३॥**

बुद्धेर्लक्षणमाह—सर्वेति । कालादावतिव्याप्तिवारणाय गुण इति । रूपादावतिव्याप्तिवारणाय सर्वव्यवहार इति । जानामीत्यनुव्यवसायगम्यज्ञानत्वं लक्षणमित्यर्थः । बुद्धिं विभजते—सेति ।

**संस्कारमात्रजन्यं ज्ञानं स्मृतिः । तद्भिन्नं ज्ञानमनुभवः । स द्विविधः—यथार्थोऽयथार्थश्चेति । तद्वति तत्प्रकारकोऽनुभवो यथार्थः । यथा 'अयं घटः' इति ज्ञानम् । सैव प्रमेत्युच्यते ॥३४॥**

### न्यायबोधिनी

शब्दं लक्षयति—श्रोत्रेति । शब्दत्वेऽतिव्याप्तिवारणाय गुण इति । रूपादावतिव्याप्तिवारणाय श्रोत्रेति । स त्रिविधः—संयोगजो विभागजः शब्दजश्चेति । यथा भेरीदण्डसंयोगजो झङ्कारादिशब्दः, हस्ताभिघातसंयोगजन्यो मृदङ्गादिशब्दः । वंशे पाट्यमाने दलद्वयविभागजश्चटचटाशब्दः । शब्दोत्पत्तिदेशमारभ्य श्रोत्रदेशपर्यन्तं वीचीतरङ्गन्यायेन कदम्बमुकुलन्यायेन वा निमित्तपवनेन शब्दधारा जायन्ते, तत्र उत्तरोत्तरशब्दे पूर्वपूर्वशब्दः कारणम् ॥३२॥

बुद्धेर्लक्षणमाह—सर्वव्यवहारेति । 'व्यवहारः' शब्दप्रयोगः । ज्ञानं विना शब्दप्रयोगासम्भवाच्छब्दप्रयोगरूपव्यवहारहेतुत्वं ज्ञानस्य लक्षणम् । बुद्धिं विभजते—सा द्विविधेति ॥३३॥

स्मृतिं लक्षयति—संस्कारेति । बहिरिन्द्रियाजन्यत्वविशिष्टसंस्कारजन्यत्वविशिष्टज्ञानत्वं स्मृतेर्लक्षणम् । विशेषणानुपादाने

स्मृतेर्लक्षणमाह—संस्कारेति । भावनाख्यः संस्कारः । संस्कारध्वंसेऽतिव्याप्तिवारणाय ज्ञानमिति । घटादिप्रत्यक्षेऽतिव्याप्तिवारणाय संस्कारजन्यमिति । प्रत्यभिज्ञायामतिव्याप्तिवारणाय मात्रेति ।

अनुभवं लक्षयति—तद्भिन्नमिति । स्मृतिभिन्नं ज्ञानमनुभव इत्यर्थः । अनुभवं विभजते—स द्विविध इति । यथार्थानुभवं लक्षयति—तद्वतीति । ननु 'घटे घटत्वम्' इति प्रमायामव्याप्तिः, घटत्वे घटाभावादिति चेत्, न, यत्र यत्सम्बन्धोऽस्ति तत्र तत्सम्बन्धानुभव इत्यर्थात्।

न्यायबोधिनी

प्रत्यक्षानुभवेऽतिव्याप्तिस्तद्वारणाय विशेषणोपादानम् । संस्कारध्वंसेऽतिव्याप्तिवारणाय विशेष्योपादानम् । ध्वंसं प्रति प्रतियोगिनः कारणत्वात् संस्कारध्वंसेऽपि संस्कारजन्यत्वस्य सत्त्वात् प्रत्यभिज्ञायामतिव्याप्तिवारणाय मात्रपदम् ।

अनुभवं लक्षयति—तद्भिन्नमिति । तद्भिन्नत्वं नाम स्मृतिभिन्नत्वम् । तथा च स्मृतिभिन्नत्वविशिष्टज्ञानत्वमनुभवस्य लक्षणम् । तत्र विशेषणानुपादाने स्मृतावतिव्याप्तिः, विशेष्यानुपादाने घटादावतिव्याप्तिरतस्तद्वारणाय विशेषणविशेष्ययोरुभयोरुपादानम् । अनुभवं विभजते—स द्विविध इति ।

यथार्थानुभवं लक्षयति—तद्वतीति । तद्वतीत्यत्र सप्तम्यर्थो विशेष्यत्वम्, तच्छब्देन प्रकारीभूतो धर्मो धर्त्तव्यः । तथा च तद्वद्विशेष्यकत्वे सति तत्प्रकारकानुभवत्वं यथार्थानुभवस्य लक्षणम् । उदाहरणम्—रजते 'इदं रजतम्' इति ज्ञानम् । अत्र रजतत्ववद्विशेष्यकत्वे सति रजतत्वप्रकारकत्वस्य सत्त्वाल्लक्षणसमन्वयः । तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालित्वमिति तु निष्कर्षः । अन्यथा यथाश्रुते रङ्गरजतयोरिमे रजतरङ्गे इत्याकारकसमूहालम्बनभ्रमेऽतिव्याप्तिः, तत्रापि रजतत्ववद्विशेष्यकत्वरजतत्वप्रकारकत्वयो रङ्गत्ववद्विशेष्यकत्वरङ्गत्वप्रकारकत्वयोः सत्त्वात् । उक्तनिष्कर्षे तु नातिव्याप्तिः, तज्ज्ञानस्य रङ्गांशे रजतत्वावगाहित्वेन रजतांशे रङ्गत्वावगाहित्वेन च रजतत्वप्रकारतायाः रङ्गत्ववन्निष्ठविशेष्यतानिरूपितत्वेऽपि रङ्गत्वनिष्ठप्रकारताया रजतत्ववन्निष्ठविशेष्यतानिरूपितत्वेऽपि रजतत्वप्रकारताया रजतत्ववन्निष्ठविशेष्यतानिरूपितत्वाभावात्, एवं रङ्गत्वप्रकारताया रङ्गत्ववन्निष्ठविशेष्यतानिरूपितत्वाभावाच्च ॥३४॥

घटत्वेऽपि घटसम्बन्धोऽस्ति इति नाव्याप्तिः । सैवेति । यथार्थानुभव एव शास्त्रे 'प्रमा' इत्युच्यते इत्यर्थः ।

**तदभाववति तत्प्रकारकश्चायथार्थः ॥३५॥**

अयथार्थानुभवं निरूपयति—तदभाववतीति । ननु 'इदं संयोगि' इति प्रमायामतिव्याप्तिः, इति चेन्न, यदवच्छेदेन यत्सम्बन्धाभावः, तदवच्छेदेन तत्सम्बन्धज्ञानस्य विवक्षितत्वात् । संयोगाभावावच्छेदेन संयोगज्ञानस्य भ्रमत्वात् संयोगावच्छेदेन संयोगसम्बन्धस्य सत्त्वात् नातिव्याप्तिः ।

**यथार्थानुभवश्चतुर्विधः—प्रत्यक्षानुमित्युपमितिशाब्दभेदात् । तत्करणमपि चतुर्विधम्—प्रत्यक्षानुमानोपमानशब्दभेदात् ॥३६॥**

यथार्थानुभवं विभजते—यथार्थेति । प्रसङ्गात् प्रमाकरणं विभजते—तत्करणमिति । प्रमाकरणमित्यर्थः । प्रमायाः करणं प्रमाणमिति प्रमाणसामान्यलक्षणम् ।

### न्यायबोधिनी

अयथार्थानुभवं लक्षयति—तदभाववतीति । अत्रापि पूर्ववत्तद्भाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालिज्ञानत्वं विवक्षणीयम् । अन्यथा यथाश्रुते रङ्गरजतयोरिमे रङ्गरजते इत्याकारकसमूहालम्बनप्रमायामतिव्याप्तिः, एतत्समूहालम्बनस्य रङ्गरजतोभयविशेष्यकत्वेन रजतत्वरङ्गत्वोभयप्रकारकत्वेन च रजतत्वाभाववद्रङ्गविशेष्यकत्वरजतत्वप्रकारकत्वयो रङ्गत्वाभाववद्रजतविशेष्यकत्वरङ्गत्वप्रकारकत्वयोश्च सत्त्वात् । उक्तनिष्कर्षे तु न तथातिव्याप्तिः, तादृशप्रमायाः रजतांशे रजतत्वावगाहित्वेन रङ्गांशे रङ्गत्वावगाहित्वेन च रजतत्वप्रकारताया रजतत्वाभाववद्रङ्गनिष्ठविशेष्यतानिरूपितत्वाभावात् । एवं रङ्गत्वप्रकारताया रङ्गत्वाभाववद्रजतनिष्ठविशेष्यतानिरूपितत्वाभावान्नातिव्याप्तिः । उदाहरणं यथा शुक्तौ 'इदं रजतम्' इति ॥३५॥

यथार्थानुभवं विभजते—चतुर्विध इति ।

तत्करणमिति—फलीभूतप्रत्यक्षादिकरणं चतुर्विधमित्यर्थः । प्रत्यक्षादिचतुर्विधप्रमाणानां प्रमाकरणत्वं सामान्यलक्षणम् । एकैकप्रमाणलक्षणं तु वक्ष्यते प्रत्यक्षज्ञानेत्यादिना ॥३६॥

## असाधारणं कारणं करणम् (२९) ॥३७॥

करणलक्षणमाह—असाधारणेति। साधारणकारणे दिक्कालादावतिव्याप्तिवारणाय असाधारणेति।

### न्यायबोधिनी

करणलक्षणमाह—असाधारणमिति। व्यापारवदसाधारणं कारणं करणमित्यर्थः। असाधारणत्वञ्च कार्यत्वातिरिक्तधर्मावच्छिन्नकार्यतानिरूपितकारणताशालित्वम्। यथा दण्डादेर्घटादिकं प्रत्यसा-

---

(२९) अव्यवधानेन फलविशिष्टं चरमकारणमेव करणमिति प्राचीननैयायिकाः।

अत एव तेषां मते लिङ्गपरामर्श एवानुमानम्। तदुक्तं **न्यायवार्तिककारैः**—"यस्माल्लिङ्गपरामर्शादनन्तरं शेषार्थप्रतिपत्तिरिति।" समर्थितमेतत् तर्कभाषाकृद्भिरपि। तथा च "लिङ्गपरामर्शोऽनुमानम्" इति तद्ग्रन्थव्याख्यानावसरे **न्यायप्रदीपकारैः**—"ननु लिङ्गपरामर्शस्य चरमकारणत्वात् तस्य च स्वोत्तरभाविभावभूतकारणानपेक्षत्वरूपत्वाद् व्यापाराभावेन करणत्वाभावात् कथमनुमानत्वमिति चेत्। न वार्त्तिककारमते यस्मिन् सति क्रिया भवत्येव तस्यैव करणत्वेन निर्व्यापारस्यादोषत्वा"दिति समाहितम्।

"तत्करणमनुमानं तच्च लिङ्गपरामर्शः" इत्यादितत्त्वचिन्तामणि-सन्दर्भस्य दीधितिकारादिभिरन्यथा व्याख्यातत्वेऽपि **गङ्गेशोपाध्यायैरुद्द्योतकरवत्** लिङ्गपरामर्शपदमेव प्रयुक्तम्।

नव्यास्तु—

> "क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम्।
> विवक्ष्यते यदा यत्र करणत्वं तदा स्मृतम्॥"

इति **वाक्यपदीय**कारिकानुसारेण व्यापारवत् कारणं करणमिति करणलक्षणमाहुः। तन्मते च परामर्शो व्यापारः करणं व्याप्तिज्ञानम्।

**तार्किकरक्षाकारैः**—

> "नित्यानित्यतया द्वेधा प्रमा नित्यप्रमाश्रयः।
> प्रमाणमितरस्यास्तु करणस्य प्रमाणता॥"

"एवञ्च नित्यप्रमाश्रयत्वादीश्वरस्यापि प्रतितन्त्रसिद्धान्तसिद्धं प्रामाण्यमपि लक्षितं भवति। तदुक्तम्, आप्तप्रामाण्यादिति। तन्मे प्रमाणं शिव इति चे"त्यादिग्रन्थसन्दर्भेणेश्वरस्यापि प्रमाणत्वमुपपादितम्।

कार्यनियतपूर्ववृत्ति कारणम् ॥३८॥

कारणलक्षणमाह—कार्येति। 'पूर्ववृत्तिकारणम्' इत्युक्ते रासभादौ अतिव्याप्तिः स्यादतो नियतेति। तावन्मात्रे कृते कार्येऽतिव्याप्तिरतः पूर्ववृत्तीति। ननु तन्तुरूपमपि पटं प्रति कारणं स्यादिति चेत्, न, 'अनन्यथासिद्धत्वे सति' इति विशेषणात्। अनन्यथासिद्धत्वम् अन्यथासिद्धिविरहः। अन्यथासिद्धिः त्रिविधा—येन सहैव यस्य यं प्रति पूर्ववृत्तित्वमवगम्यते तत्तेनान्यथासिद्धम्। यथा तन्तुना तन्तुरूपं तन्तुत्वं च पटं प्रति। अन्यं प्रति पूर्ववृत्तित्वे ज्ञात एव यस्य यं प्रति पूर्ववृत्तित्वमवगम्यते तं प्रति तदन्यथासिद्धम्। यथा शब्दं प्रति पूर्ववृत्तित्वे ज्ञाते एव पटं प्रति आकाशस्य। अन्यत्र क्लृप्तनियतपूर्ववृत्तिन एव कार्यसम्भवे तत्सहभूतमन्यथासिद्धम् यथा पाकजस्थले गन्धं प्रति रूपप्रागभावस्य। एवं च अनन्यथासिद्धनियतपूर्ववृत्तित्वं कारणत्वम्।

कार्यं प्रागभावप्रतियोगि ॥३९॥

कार्यलक्षणमाह—कार्यमिति।

## न्यायबोधिनी

धारणकारणत्वम्। कार्यत्वातिरिक्तो घटत्वादिरूपो धर्मः तदवच्छिन्नकार्यता घटे तन्निरूपितकारणता दण्डे अतो घटं प्रति दण्डोऽसाधारणं कारणम्। भ्रम्यादिरूपव्यापारवत्त्वाच्च करणम्। साधारणकारणत्वञ्च कार्यत्वावच्छिन्नकार्यतानिरूपितकारणताशालित्वम्। यथेश्वरादृष्टादेः कार्यत्वावच्छिन्नं प्रत्येव कारणत्वात्साधारणकारणत्वम्॥३७॥

कारणं लक्षयति—कार्यनियतेति। कार्यं प्रति नियतत्वे सति पूर्ववृत्तित्वं कारणत्वम्। नियतत्वविशेषणानुपादाने पूर्ववर्तिनो रासभादेरपि घटादिकारणत्वं स्यादतो नियतत्वे सतीति विशेषणम्। नियतपूर्ववर्तिनो दण्डरूपादेरपि घटकारणत्वं स्यादतोऽनन्यथासिद्धपदमपि कारणलक्षणे निवेशनीयम्। एवं च न तत्रातिव्याप्तिः, दण्डरूपादीनामन्यथासिद्धत्वात्॥३८॥

कार्यं लक्षयति—कार्यमिति। प्रागभावप्रतियोगित्वं कार्यस्य लक्षणम्। कार्योत्पत्तेः पूर्वम् 'इह घटो भविष्यति' इति या प्रतीतिर्जायते तत्प्रतीतिविषयीभूतो योऽभावः स प्रागभावः, तत्प्रतियोगि घटादिरूपं कार्य्यम्॥३९॥

कारणं त्रिविधम्—समवाय्यसमवायिनिमित्तभेदात् । यत्समवेतं कार्यमुत्पद्यते तत् समवायिकारणम् । यथा तन्तवः पटस्य पटश्च स्वगतरूपादेः । कार्येण कारणेन वा सहैकस्मिन्नर्थे समवेतत्वे सति यत् कारणं तदसमवायिकारणम् । यथा तन्तुसंयोगः पटस्य तन्तुरूपं पटरूपस्य । तदुभयभिन्नं कारणं निमित्तकारणम् । यथा तुरीवेमादिकं पटस्य ॥४०॥

कारणं विभजते—कारणमिति । समवायिकारणलक्षणमाह—यत्समवेतमिति । यस्मिन् समवेतमित्यर्थः । असमवायिकारणलक्षणमाह—

### न्यायबोधिनी

कारणं विभजते—कारणमिति। समवायिकारणमसमवायिकारणं निमित्तकारणं चेति ।

समवायिकारणं लक्षयति—यत्समवेतमिति । यस्मिन्समवेतं तत्समवायेन सम्बद्धं सत् कार्यमुत्पद्यते तत्समवायिकारणमित्यर्थः। उदाहरणम्—यथा तन्तव इति । येषु तन्तुषु समवायेन सम्बद्धं सत्पटात्मकं कार्यमुत्पद्यते तत्तन्तवः समवायिकारणमित्यर्थः । सामान्यलक्षणन्तु समवायसम्बन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणत्वं समवायिकारणत्वमिति। समवायसम्बन्धेन घटाधिकरणे कपालादौ कपालादेः तादात्म्यसम्बन्धेनैव सत्त्वात्, समवायसम्बन्धावच्छिन्नघटत्वाद्यवच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकपालत्वाद्यवच्छिन्नकारणतायाः कपालादौ सत्त्वाल्लक्षणसमन्वयः। समवायेन जन्यभावत्वावच्छिन्नं प्रति तादात्म्यसम्बन्धेन द्रव्यस्यैव कारणत्वाज्जन्यभावेषु द्रव्यगुणकर्मसु त्रिषु द्रव्यमेव समवायिकारणम्। द्रव्ये तु द्रव्यावयवाः समवायिकारणम्, अतो गुणादावपि द्रव्यमेव समवायिकारणमित्याशयेनाह—पटश्च स्वगतरूपादेरिति । समवायिकारणमित्यनुषज्यते ।

असमवायिकारणं लक्षयति—कार्येणेति । असमवायिकारणं द्विविधं कार्येण सहैकस्मिन्नर्थे समवेतं सत् यत् कारणं तत् इत्येकम्, कारणेन सहैकस्मिन्नर्थे समवेतं सत् यत् कारणं तदपरमसमवायिकारणमित्यर्थः। अत्र कारणेनेत्यस्य स्वकार्यसमवायिकारणेनेत्यर्थः।

कार्येणेति । कार्येणेत्येतदुदाहरति—तन्तुसंयोग इति । कार्येण पटेन सह एकस्मिन् तन्तौ समवेतत्वात् तन्तुसंयोग. पटस्यासमवायिकारणमित्यर्थः । कारणेन सहेत्येतदुदाहरति—तन्तुरूपमिति । कारणेन पटेन सह एकस्मिन् तन्तौ समवेतत्वात् तन्तुरूपं पटरूपस्यासमवायिकारणमित्यर्थः । निमित्तकारणं लक्षयति—तदुभयेति । समवाय्यसमवायिभिन्नकारणं निमित्तकारणमित्यर्थः ।

## न्यायबोधिनी

जन्यद्रव्यमात्रे अवयवसंयोगस्यैवासमवायिकारणत्वात्पटात्मककार्ये तदवयवतन्तुसंयोगस्यैवासमवायिकारणत्वमिति दर्शयन् प्रथममुदाहरति—यथा तन्तुसंयोगः पटस्येति । यथा तन्तुसंयोगः पटात्मककार्येण सहैकस्मिन्नर्थे तन्तौ समवायसम्बन्धेन विद्यमानत्वे सति कारणत्वात्पटात्मककार्यं प्रति तन्तुसंयोगोऽसमवायिकारणमित्यर्थः । द्वितीयमसमवायिकारणं कारणेन सहेत्यादिना पूर्वोक्तं तदुदाहरति—तन्तुरूपमिति । कारणेन सह पटरूपसमवायिकारणीभूतपटेन सह, एकस्मिन्नर्थे तन्तुरूपेऽर्थे समवेतत्वे सति कारणत्वात् तन्तुरूपं पटगतरूपस्यासमवायिकारणमित्यर्थः । सामान्यलक्षणं तु समवायसम्बन्धावच्छिन्नकार्यतानिरूपिता या समवायस्वसमवायिसमवेतत्वान्यतरसम्बन्धावच्छिन्ना कारणता तदाश्रयत्वमसमवायिकारणत्वमिति । द्रव्यासमवायिकारणीभूतावयवसंयोगादौ तु समवायसम्बन्धावच्छिन्नघटत्वावच्छिन्नकार्यतानिरूपिता समवायसम्बन्धावच्छिन्ना कपालद्वयसंयोगनिष्ठा कारणता कपालद्वयसंयोगे वर्तते । एवमाद्यपतनक्रियायामाद्यस्यन्दनक्रियायां च गुरुत्वद्रवत्वे असमवायिकारणे भवतः । आद्यपतनक्रियां प्रति आद्यस्यन्दनक्रियां प्रति च समवायसम्बन्धेनैव तयोः कारणत्वात् । अवयविगुणभूतघटपटरूपादौ त्ववयवगुणीभूतकपालतन्तुरूपादेः स्वपदग्राह्यकपालतन्तुरूपादिसमवायिकपालतन्त्वादिसमवेतत्वसम्बन्धेनैव कारणत्वात् तत्सम्बन्धावच्छिन्नकारणताश्रयत्वमवयवगुणीभूतकपालतन्तुरूपादौ वर्तते ।

निमित्तकारणं लक्षयति—तदुभयभिन्नमिति । समवायिकारणभिन्नत्वे सति असमवायिकारणभिन्नत्वे सति कारणत्वं निमित्तकारणस्य लक्षणमित्यर्थः ॥४०॥

तदेतत्त्रिविधकारणमध्ये यदसाधारणं कारणं तदेव करणम्। तत्र प्रत्यक्षज्ञानकरणं प्रत्यक्षम्। इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षम्। तद्द्विविधम्—निर्विकल्पकं सविकल्पकं चेति। तत्र निष्प्रकारकं ज्ञानं निर्विकल्पकम्। सप्रकारकं ज्ञानं सविकल्पकम्। यथा डित्थोऽयं, ब्राह्मणोऽयं, श्यामोऽयमिति ॥४१॥

करणलक्षणमुपसंहरति—तदेतदिति। प्रत्यक्षलक्षणमाह—तत्रेति। प्रमाणचतुष्टयमध्ये इत्यर्थः। प्रत्यक्षज्ञानस्य लक्षणमाह—इन्द्रियेति।

न्यायबोधिनी

करणलक्षणमुपसंहरति तदेतदिति। यदसाधारणमिति। व्यापारवत्त्वे सतीत्यपि पूरणीयम्, अन्यथा तन्तुकपालसंयोगयोरतिव्याप्तिः, तन्तुकपालसंयोगयोरपि कार्यत्वातिरिक्तपटत्वघटत्वावच्छिन्नं प्रति कारणत्वादसाधारणत्वमस्त्येवेत्यतस्तत्र करणत्ववारणाय व्यापारवत्त्वे सतीति करणलक्षणे विशेषणं देयम्। व्यापारत्वञ्च तज्जन्यत्वे सति तज्जन्यजनकत्वम्। भवति हि दण्डजन्यत्वे सति दण्डजन्यघटजनकत्वाद्भ्रम्यादेर्दण्डव्यापारत्वम्। एवं कपालसंयोगतन्तुसंयोगादेरपि कपालतन्तुव्यापारत्वं कपालतन्तुजन्यत्वे सति कपालतन्तुजन्यघटपटजनकत्वात्। करणलक्षणेऽसाधारणत्वविशेषणानुपादाने ईश्वरादृष्टादेरपि व्यापारवत्कारणत्वं स्यात्, अतस्तत्रातिव्याप्तिवारणायासाधारणेति विशेषणम्।

षड्विधेन्द्रियभूतप्रत्यक्षप्रमाणस्य लक्षणमाह—तत्रेति। प्रमाभूतप्रत्यक्षादिषु प्रत्यक्षात्मकं यज्ज्ञानं चाक्षुषादिप्रत्यक्षं तत्प्रति व्यापारवदसाधारणं कारणमिन्द्रियं भवति। अतः प्रत्यक्षज्ञानकरणत्वं प्रत्यक्षस्य लक्षणम्। आद्यसन्निकर्षातिरिक्तचतुर्विधसन्निकर्षाणां समवायरूपत्वेनेन्द्रियजन्यत्वाभावाद्व्यापारत्वं न सम्भवतीति इन्द्रियमनःसंयोगस्यैव बाह्यप्रत्यक्षे जननीये इन्द्रियव्यापारता बोध्या। मानसप्रत्यक्षे त्वात्ममनःसंयोगस्यैव सा बोध्या।

प्रत्यक्षप्रमाणलक्षणमुक्त्वा प्रत्यक्षप्रमालक्षणमाह—इन्द्रियार्थसन्निकर्षेति। जन्यप्रत्यक्षस्यैव लक्ष्यत्वमित्यभिप्रायेणेदं लक्षणम्। ईश्वरप्रत्यक्षसाधारणं तु—ज्ञानाकरणकं ज्ञानं प्रत्यक्षमिति। ज्ञानं व्याप्तिज्ञानं सादृश्यज्ञानं पदज्ञानं च तदेव करणं येषां तानि ज्ञान-

इन्द्रियं चक्षुरादिकम्, अर्थो घटादिः, तयोः सन्निकर्षः संयोगादिः, तज्जन्यं ज्ञानमित्यर्थः। तद्विभजते—तद् द्विविधमिति। निर्विकल्पकस्य लक्षणमाह—निष्प्रकारकेति। विशेषणविशेष्यसम्बन्धानवगाहि ज्ञानमित्यर्थः।

ननु निर्विकल्पके किं प्रमाणमिति चेत्, न, गौरिति विशिष्टज्ञानं विशेषणज्ञानजन्यं विशिष्टज्ञानत्वात् दण्डीति ज्ञानवत् इत्यनुमानस्य प्रमाणत्वात्। विशेषणज्ञानस्यापि सविकल्पकत्वे अनवस्थाप्रसङ्गात् निर्विकल्पकसिद्धिः (२०)। सविकल्पकं लक्षयति—सप्रकारकमिति। नामजात्यादिविशेषणविशेष्यसम्बन्धावगाहि ज्ञानमित्यर्थः। सविकल्पकमुदाहरति—यथेति।

## न्यायबोधिनी

करणकानि अनुमित्युपमितिशाब्दानि तद्भिन्नं प्रत्यक्षमित्यर्थः। प्रत्यक्षे इन्द्रियाणामेव करणत्वं न तु ज्ञानस्य। तथा च ज्ञानाकरणकज्ञानत्वस्य प्रत्यक्षसामान्य एव सत्त्वाल्लक्षणसङ्गतिः। प्रत्यक्षं विभजते—निर्विकल्पकमिति।

तल्लक्षयति—तत्र निष्प्रकारकमिति। प्रकारताशून्यज्ञानत्वमेव निर्विकल्पकत्वमित्यर्थः। निर्विकल्पके चतुर्थी विषयता स्वीक्रियते। त्रिविधविषयतामध्ये एकापि तत्र नास्ति। अतो विशेष्यताशून्यज्ञानत्वं संसर्गताशून्यज्ञानत्वमित्यपि लक्षणं सम्भवति।

सविकल्पकं लक्षयति—सप्रकारकमिति। विषयताया ज्ञाननिरूपितत्वाज्ज्ञानस्य विषयतानिरूपकत्वेन प्रकारतानिरूपकज्ञानत्वं सविकल्पकस्य लक्षणम्। एवं विशेष्यतानिरूपकज्ञानत्वं संसर्गतानिरूपकज्ञानत्वमित्यपि लक्षणं सम्भवति। उदाहरणम्—यथेति। इदन्त्वावच्छिन्नविशेष्यतानिरूपितडित्थत्वप्रकारताशालिज्ञानम् इदन्त्वावच्छिन्नविशेष्यतानिरूपितब्राह्मणत्वप्रकारताशालिज्ञानं च सविकल्पकमित्यर्थः ॥४१॥

(२०) ननु बालानां प्रथमतः स्तन्यपानादिप्रवृत्त्युपपत्तिरीत्या जन्मान्तरीयसंस्कारमूलकस्मृतिं प्रकल्प्याऽऽद्यप्रत्यक्षमुपपादनीयमिति नाशङ्क्यम्, अनन्तसंस्कारमूलकानन्तस्मृतिकल्पनापेक्षया निर्विकल्पकानामनन्तानामपि युक्तत्वात्, नवाविष्कृतवस्तुगतवैजात्यानां देवदत्तत्वादिजातीनाञ्च जन्मान्तराऽननुभूततया तत्तद्रूपैः प्राथमिकप्रत्यक्षानुरोधेन निर्विकल्पकस्वीकारावश्यकत्वाच्च।

प्रत्यक्षज्ञानहेतुरिन्द्रियार्थसन्निकर्षः षड्विधः—संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, विशेषणविशेष्यभावश्चेति (३१)। १—चक्षुषा घटप्रत्यक्षजनने संयोगः सन्निकर्षः। २—घटरूपप्रत्यक्षे संयुक्तसमवायः सन्निकर्षः। चक्षुःसंयुक्ते घटे रूपस्य समवायात्। ३—रूपत्वसामान्यप्रत्यक्षे संयुक्तसमवेतसमवायः सन्निकर्षः। चक्षुःसंयुक्ते घटे रूपं समवेतं,

इन्द्रियार्थसन्निकर्षं विभजते—प्रत्यक्षेति॥ संयोगसन्निकर्षमुदाहरति—चक्षुषेति। द्रव्यप्रत्यक्षे सर्वत्र संयोगः सन्निकर्ष इत्यर्थः। आत्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेन, ततः प्रत्यक्षज्ञानमुत्पद्यते। संयुक्तसमवायमुदाहरति—घटरूपेति। तत्र युक्तिमाह—चक्षुःसंयुक्तइति।

**न्यायबोधिनी**

चाक्षुषादिषड्विधप्रत्यक्षकारणीभूतान् षड्विधसन्निकर्षान्विभजते—संयोग इत्यादि। द्रव्यवृत्तिलौकिकविषयतासम्बन्धेन चाक्षुषत्वावच्छिन्नं प्रति चक्षुःसंयोगस्य कारणत्वम्। द्रव्यसमवेतवृत्तिलौकिकविषयतासम्बन्धेन चाक्षुषत्वावच्छिन्नं प्रति चक्षुःसंयुक्तसमवायस्य हेतुत्वम्। द्रव्यसमवेतसमवेतवृत्तिलौकिकविषयतासम्बन्धेन चाक्षुषत्वावच्छिन्नं प्रति चक्षुःसंयुक्तसमवेतसमवायस्य हेतुत्वम्। द्रव्यग्राह-

---

शाब्दिकनये च नास्ति निर्विकल्पकम्। तदुक्तं **वाक्यपदीये**—"न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते" इति। सौगतमते तु निर्विकल्पकमेव प्रत्यक्षं सविकल्पकस्य प्रत्यक्षत्वं प्रमाणत्वं च नास्ति।

(३१) कौमारिलमते च त्रेधा सन्निकर्षः। संयोगः संयुक्ततादात्म्यं संयुक्ततदात्मतादात्म्यम्। तदुक्तं **मानमेयोदये**—"यथा परे रूपत्वादिग्रहणाय संयुक्तसमवेतसमवायमाश्रयन्ते, तथाऽस्माकमपि संयुक्ततदात्मतादात्म्यं नाम तृतीयः सन्निकर्षोऽस्तु।" (६ पृ०)

**प्राभाकरास्तु** संयोगः संयुक्तसमवायः, समवाय इत्येवं त्रिविधं सन्निकर्षमाहुः। तन्मते रूपत्वादीनां शब्दत्वस्याभावस्य चाभावात् समवायस्य च प्रत्यक्षत्वायोगात् संयुक्तसमवेतसमवायस्य समवेतसमवायस्य विशेषणविशेष्यभावस्य च सन्निकर्षत्वं नावश्यकमिति भावः।

तत्र रूपत्वस्य समवायात्। ४—श्रोत्रेण शब्दसाक्षात्कारे समवायः सन्निकर्षः। कर्णविवरवर्त्याऽऽकाशस्य श्रोत्रत्वात् शब्दस्याकाशगुणत्वात् गुणगुणिनोश्च समवायात्। ५—शब्दत्वसंयुक्तसमवेतसमवायमुदाहरति—रूपत्वेति। समवायमुदाहरति—श्रोत्रेणेति। तदुपपादयति—कर्णेति। ननु दूरस्थशब्दस्य कथं श्रोत्रेण सम्बन्ध इति चेत्, न, वीचीतरङ्गन्यायेन कदम्बमुकुलन्यायेन वा (३२) शब्दाच्छब्दान्तरोत्पत्तिक्रमेण श्रोत्रदेशे जातस्य श्रोत्रसम्बन्धात् प्रत्यक्षत्वसम्भवात्। समवेतसमवायमुदाहरति—शब्दत्वेति। विशेषणविशेष्यभावमुदाहरति—

न्यायबोधिनी

काणीन्द्रियाणि चक्षुस्त्वङ्मनांसि त्रीण्येव। अन्यानि घ्राणरसनश्रवणानि गुणग्राहकाणि। अतस्त्वगिन्द्रियस्थले द्रव्यवृत्तिलौकिकविषयतासम्बन्धेन त्वाचत्वावच्छिन्नं प्रति त्वक्संयोगस्य हेतुता। एवं द्रव्यसमवेतत्वाचत्वावच्छिन्नं प्रति त्वक्संयुक्तसमवायस्य हेतुता। द्रव्यसमवेतसमवेतोष्णत्वशीतत्वादिजातिस्पार्शनप्रत्यक्षे त्वक्संयुक्तसमवेतसमवायस्य हेतुता। एवमात्ममानसप्रत्यक्षे मनःसंयोगस्य हेतुता। आत्मसमवेतसुखादिमानसप्रत्यक्षे मनःसंयुक्तसमवायस्य हेतुता। आत्मसमवेतसमवेतसुखत्वादिमानसप्रत्यक्षे मनःसंयुक्तसमवेतसमवायस्य हेतुता। रसनघ्राणयोस्तु रसगन्धतद्गतजातिग्राहकत्वेन द्वितीयतृतीययोः सन्निकर्षयोरेव तत्र हेतुता वाच्या। श्रवणेन्द्रियस्याकाशरू-

---

(३२) वैशेषिकमते वीचीतरङ्गन्यायेन शब्दात् शब्दान्तरमुत्पद्यते। तथा च प्रशस्तपादभाष्ये—

"शब्दाच्च संयोगविभागनिष्पन्नाद् वीचीसन्तानवच्छब्दसन्तान इत्येवंसन्तानेन श्रोत्रप्रदेशमागतस्य ग्रहणम्।" इति।

न्यायनये च कदम्बगोलकन्यायेन तदुत्पत्तिः। तदुक्तं न्यायवार्त्तिके—

"तत्राद्यः शब्दः संयोगविभागहेतुकः तस्माच्छब्दान्तराणि कदम्बगोलकन्यायेन सर्वदिक्कानि तेभ्यः प्रत्येकमेकैकः शब्दो मन्दतरतमादिन्यायेनाश्रयाप्रतिबन्धमनुविधीयमानः प्रादुरस्तीति।"

वेदान्तिनस्तु "घ्राणरसनत्वगात्मकानीन्द्रियाणि स्वस्थानस्थितान्येव गन्धरसस्पर्शोपलम्भान् जनयन्ति। चक्षुःश्रोत्रे तु स्वत एव विषयदेशं गत्वा स्वस्वविषयं

साक्षात्कारे समवेतसमवायः सन्निकर्षः। श्रोत्रसमवेते शब्दे शब्दत्वस्य समवायात्। ६—अभावप्रत्यक्षे विशेषणविशेष्य-

अभावेति। तदुपपादयति–घटाभाववदिति। भूतलं विशेष्यम्। घटाभावो विशेषणम्। 'भूतले घटो नास्ति' इत्यत्र अभावस्य विशेष्यत्वं द्रष्टव्यम्। एतेन अनुपलब्धेः प्रमाणान्तरत्वं निरस्तम्। 'यद्यत्र घटोऽभविष्यत् तदा भूतलमिवाद्रक्ष्यत् दर्शनाभावान्नास्ति' इति तर्कितप्रतियोगिसत्त्वविरोध्यनुपलब्धेः सहकृतेनेन्द्रियेणैव अभावज्ञानोपपत्तौ अनुपलब्धेः प्रमाणान्तरत्वासम्भवात्। अधिकरणत्वज्ञानार्थमपेक्षणीयेन्द्रियस्यैव करणत्वोपपत्तावनुप-

न्यायबोधिनी

पत्वेन शब्दस्याकाशगुणत्वेन श्रवणेन्द्रियेण समं शब्दस्य समवायः सन्निकर्षः। शब्दवृत्तिशब्दत्वकत्वखत्वादिजातिविषयकश्रावणप्रत्यक्षे समवेतसमवायस्य हेतुता च बोध्या। अभावप्रत्यक्ष इति। विशेषणविशेष्यभावो नाम विशेषणतासन्निकर्षः। पञ्चविधसन्निकर्षेषु मध्ये संयोगस्थाने संयुक्तपदं समवायस्थाने समवेतपदं च घटयित्वा अभावस्थले निर्वाह्यम्। तथा हि द्रव्याधिकरणकाभावप्रत्यक्षे इन्द्रिय-

---

गृहीतः, श्रोत्रस्यापि चक्षुरादिवत् परिच्छिन्नतया भेर्य्यादिदेशगमनसम्भवात्। अत एवानुभवो भेरीशब्दो मया श्रुत इति। वीचीतरङ्गादिन्यायेन कर्णशष्कुलीप्रदेशेऽनन्तशब्दोत्पत्तिकल्पनाया गौरवं 'भेरीशब्दो मया श्रुत' इति प्रत्ययस्य भ्रमत्वकल्पनागौरवञ्च स्या"दिति [ वेदान्तपरिभाषायां ] वदन्ति।

तन्न समीचीनम्। यतः श्रोत्रस्यामूर्त्तत्वेन विषयदेशोपगमनं न सम्भवति; न च क्रियाकारणनोदनाभिघातसमवायात् तत्र क्रियावत्त्वमित्यपि साम्प्रतम्, आत्मनि व्यभिचारात्। अत एव विद्यमानोऽप्याकाशेऽभिघातः क्रियाहेतुर्न भवति, महत्परिमाणेन प्रतिबन्धात्। "तुष्यतु दुर्जन" इतिन्यायेन श्रोत्रस्य क्रियावत्त्वस्वीकारेऽपि न समीहितसिद्धिः, तथा सति—

"वायौ शब्दानुकूले च न तस्य श्रवणं भवेत्।
गच्छन्त्याः प्रतिकूलो हि श्रोत्रवृत्तेः स मारुतः॥"

शब्दानुकूले पवने दवीयसोऽपि शब्दस्य श्रवणं प्रतिवातञ्च समीपेऽपि तस्याश्रवणमित्यस्य विपरीतप्रसक्तिः स्यात् श्रोत्रस्य विषयदेशगमनपक्षे। वस्तुतस्तु श्रोत्रस्य शब्ददेशसमुपसर्पणमेवासम्भवदुक्तिकम्, कर्णशष्कुल्यवच्छिन्नस्यैव नभसः

भावः सन्निकर्षः। घटाभाववद्भूतलमित्यत्र चक्षुःसंयुक्ते भूतले लब्धेः करणत्वस्यायुक्तत्वात्। विशेषणविशेष्यभावो विशेषणविशेष्यस्वरूपमेव नातिरिक्तः सम्बन्धः। प्रत्यक्षज्ञानमुपसंहरन् तस्य करणमाह—

न्यायबोधिनी

संयुक्तविशेषणता। द्रव्यसमवेतसमवेताधिकरणकाभावप्रत्यक्षे इन्द्रियसंयुक्तसमवेतविशेषणता। द्रव्यसमवेतसमवेताधिकरणकाभावप्रत्यक्षे संयुक्तसमवेतसमवेतविशेषणता च सन्निकर्षः। तत्र घटे पटत्वाभावः

---

श्रोत्रत्वस्वीकारात्; न हि कर्णशष्कुली मूर्त्तापि सती वक्तृवक्त्रमुपसर्पति, तस्माद् गच्छत्यपि नभोमात्रे कर्णशष्कुल्युपधानविरहात् श्रोत्रस्य विषयदेशगमनं कथमपि न सम्भवति, कर्णशष्कुल्युधानमन्तरेणापि केवलनभःसम्बन्धेन शब्दप्रत्यक्षोपगमे गौडदेशप्रयुक्तो गोशब्दो वाराणस्यामपि श्रूयेत। तस्मादकामेनापि वीचीतरङ्गन्यायेन शब्दोत्पत्तिपक्ष एव स्वीकरणीय इति।

आर्हतास्तु भाषावर्गणापरमाणुभिः पुद्गलाभिधानैरारभ्यते शब्दस्तथा च सावयवः। तदुक्तं **प्रमेयकमलमार्त्तण्डे**—"यदस्माभिः श्रावणस्वभावविनाशोत्पत्तिमत् पुद्गलद्रव्यमित्यभिधीयते, तद्युष्माभिर्वर्ण इत्याख्यायते।" सूत्रितं च **प्रमाणनयतत्त्वालोकालङ्कारे** "अकारादिः पौद्गलिको वर्ण" इति। स च शब्दः स्वोत्पत्तिस्थानात् प्रविशति कर्णरन्ध्रमिति नानुपपत्तिः प्रत्यक्षस्येति वदन्ति।

तन्मतमित्थं निराकृतं जयन्तभट्टपादैर्न्यायमञ्जर्याम्—

"वर्णस्यावयवाः सूक्ष्माः सन्ति केचन पुद्गलाः।
तैर्वर्णोऽवयवी नाम जन्यते पश्य कौतुकम्॥
कृशश्च गच्छन् स कथं न विक्षिप्येत मारुतैः।
दलशो वा न भज्येत वृक्षाद्यभिहतः कथम्॥
प्रयाणकावधिः कश्च गच्छतोऽस्य तपस्विनः।
एकश्रोत्रप्रविष्टो वा स श्रूयेतापरैः कथम्॥
निष्क्रम्य कर्णादेकस्मात् प्रवेशः श्रवणान्तरे।
यदीष्येत कथं तस्य युगपद् बहुभिः श्रुतिः॥
श्रोतृसंख्यानुसारेण न नानावर्णसम्भवः।
वक्तुस्तुल्यप्रयत्नत्वात् श्रोतृभेदे तदत्यये॥"

एतेन—

"द्वारावृतेऽपि सदने प्रणयप्रकर्षा-
देवं प्रिये स्फुरदपत्रपया स्खलन्ती।

घटाभावस्य विशेषणत्वात् । एवं सन्निकर्षषट्कजन्यं ज्ञानं एवेति । असाधारणकारणत्वादिन्द्रियं प्रत्यक्षज्ञानकरणमित्यर्थः । प्रत्य-

न्यायबोधिनी

संयुक्तविशेषणतया गृह्यते । घटसमवेतघटत्वादौ पृथिवीत्वाभावः संयुक्तसमवेतविशेषणतया गृह्यते। घटसमवेतसमवेतरूपत्वादौ नीलत्वा- भावश्च संयुक्तसमवेतसमवेतविशेषणतया गृह्यते। इति संक्षेपः॥४२॥

इति प्रत्यक्षपरिच्छेदः ।

---

द्वारि स्थितस्य सरसा कुलवालिकाया.
कर्णातिथीभवति मन्मथसूक्तिमुद्रा ॥

"एवञ्च प्राप्त एवैष शब्दः श्रोत्रेण गृह्यते ।
श्रोत्रस्यापि ततः सिद्धा निर्बाधा प्राप्यकारिता ॥"

इति **रत्नाकरावतारिकोक्तिर्न** सङ्गच्छते शब्दस्य गुणरूपतायां वीचीतरङ्गादिन्यायेन तदुत्पत्तेश्च स्वीकारमन्तरेण ।

अथ नैयायिकनयेऽपि—

"शब्दः शब्दान्तरं सूते इति तावदलौकिकम् ।
कार्य्यकारणभावो हि न दृष्टस्तेषु बुद्धिवत् ॥
जन्यन्तेऽनन्तरे देशे शब्दैः स्वसदृशाश्च ते ।
तिर्य्यगूर्द्धमधश्चेति केयं वा श्रद्धानता ॥
शब्दान्तराणि कुर्व्वन्तः कथं च विरमन्ति ते ।
न हि वेगक्षयस्तेषां मरुतामिव कल्पते ॥
कुड्यादिव्यवधाने च शब्दस्यावरणं कथम् ।
व्योम्नः सर्वगतत्वाद्धि कुड्यमध्ये व्यवस्थितिः ॥
तुल्यारम्भे च तीव्रेण मन्दस्य जननं कथम् ।
श्रूयते चान्तिकात् तीव्रः शब्दो मन्दस्तु दूरतः ॥
वीचीसन्तानतुल्यत्वमपि शब्देषु दुर्वचम् ।
मूर्त्तिमत्त्वक्रियायोगवेगादिरहितात्मसु ॥"

नैवम्—

समानजातीयगुणारम्भिणो बहवो गुणाः ।
सन्ति रूपादयो लोके ततो नेयं कुकल्पना ॥

शब्दसन्तानविरतिरपि भवत्यदृष्टाधीनसंसर्गाणां सहकारिणामनवस्थानात् । तदुक्तं **कन्दलीकारैः**—

"न चानवस्था यावद्दूरं निमित्तकारणभूतः कौष्ठ्यवायुरनुवर्त्तते तावद्दूरं शब्दसन्तानानुवृत्तिः । अत एव प्रतिवातं शब्दानुपलम्भः कौष्ठ्यवायुप्रतीघातात् ।" इति ।

प्रत्यक्षम् । तत्करणमिन्द्रियम् । तस्मात् इन्द्रियं प्रत्यक्षप्रमाणमिति सिद्धम् ॥४२॥ प्रत्यक्षं व्याख्यातम् ।

त्तमुपसंहरति—तस्मादिति । इति प्रत्यक्षपरिच्छेदः (३३) ।

तदिदं सुस्पष्टमुक्तं कणादरहस्ये—

"कण्ठताल्वाद्यभिघातजनितकर्मणो वायोः शब्दनिमित्तकारणतामापन्नस्य यावद्वेगमभिप्रतिष्ठमानस्य क्वचिद्गतिप्रतिबन्धात् क्वचिद् विनाशाद् वा शब्दान्तरानुत्पत्तेः शब्दसन्तानविनाशात् ।"

अत एव कुड्यादिव्यवधाने शब्दानुपलब्धिरपि सूपपद्यते । न्यायमञ्जरीकारैरन्यथापि समाहितमेतत् । तथा च—

"यत्तु कुड्यादिव्यवधाने किमिति विरमति शब्दसन्तानारम्भ इति । नैष दोषः । निरावरणस्य हि व्योम्नः शब्दारम्भे समवायिकारणत्वं तथादर्शनात् कल्प्यते नाकाशमात्रस्येति ।"

तीव्रेणापि शनैरेवमतीव्रारम्भसम्भवः ।
सीदत्सचिवसामर्थ्यसापेक्षक्षीणवृत्तिना ॥
वीचीसन्तानदृष्टान्तः किञ्चित्साम्यादुदाहृतः ।
न तु वेगादिसामर्थ्यं शब्दानामस्त्यपामिव ॥

(३३) अलौकिकसन्निकर्षजन्यमलौकिकमपि प्रत्यक्षमस्ति । तत्र सामान्यलक्षणा ज्ञानलक्षणा योगजधर्मश्चेति त्रिविधः सन्निकर्षः । तत्र सामान्यलक्षणा—धूमत्वादिज्ञानरूपा, सामान्यं लक्षणं विषयो यस्या इतिव्युत्पत्तेः । तथा च धूमत्वेन सकलधूमानां वह्नित्वेन सकलवह्नीनां च भानसाधनार्थं तत्स्वीकार आवश्यकः । सकलवह्निधूमभानाभावे का क्षतिरिति नाशङ्कनीयम्, प्रत्यक्षधूमे वह्निव्याप्तेर्गृहीतत्वादन्यधूमस्य चानुपस्थितत्वाद् धूमो वह्निव्याप्यो न वेति संशयानुपपत्तेः । तदङ्गीकारे तु तादृशालौकिकप्रत्यासत्त्या धूमत्वादिप्रकारकज्ञानरूपया सकलधूमोपस्थितौ देशान्तरीयकालान्तरीयधूमे वह्निव्याप्यत्वसन्देहः सूपपादः ।

ज्ञानलक्षणा च स्वजन्यप्रत्यक्षोद्बुद्धसंस्कारजन्यस्मृतिरूपा । एवञ्च यत्र चन्दनादौ संयुक्तसमवायेन सौरभं गृहीतं पश्चाच्चन्दनखण्डे दृष्टे स्मृतं सौरभं चक्षुषा गृह्यते—सुरभि चन्दनमिति, तत्र चक्षुषा सह सौरभस्य तादृशस्मृतिरूपज्ञानमेव सन्निकर्षः । नन्वेतयोर्द्वयोरेव प्रत्यासत्त्योर्ज्ञानरूपत्वात् को भेद इति चेत्, कार्य्यकारणभावभेदादेव तयोर्भेदव्यवहारः । तथा च ज्ञानलक्षणानिरूपितकार्य्यताभिन्नकार्य्यतानिरूपितकारणतावती सामान्यलक्षणा ज्ञानलक्षणातो भिन्नेति भावः ।

## अथ अनुमानम्

**अनुमितिकरणमनुमानम्। परामर्शजन्यं ज्ञानमनुमितिः (३४)।**

अनुमानं लक्षयति—अनुमितिकरणमिति । अनुमितेर्लक्षणमाह—परामर्शेति । ननु संशयोत्तरप्रत्यक्षेऽतिव्याप्तिः । स्थाणुपुरुषसंशयानन्तरं

**न्यायबोधिनी**

**अनुमानं लक्षयति—अनुमितीति । अनुमितौ व्याप्तिज्ञानं करणं, परामर्शो व्यापारः, अनुमितिः फलं कार्यमित्यर्थः । परामर्शस्य व्याप्ति-**

---

एवं योगिनां सूक्ष्मव्यवहितविप्रकृष्टपदार्थप्रत्यक्षे योगजधर्म्मः सन्निकर्षः । तदुक्तं **न्यायमञ्जर्याम्**—

"यथा वा पुटपाकेन शोध्यमानं शनैः शनैः ।
हेम निष्प्रतिकाशं तद् याति कल्याणतां पराम् ॥
तथैव भावनाभ्यासाद् योगिनामपि मानसम् ।
ज्ञाने सकलविज्ञेयसाक्षात्कारे क्षमं भवेत् ॥"

योगिप्रत्यक्षं सौगतैरप्यनुमतम् । तथा च 'न्यायविन्दौ' **धर्म्मकीर्तिः**—

"भूतार्थभावनाप्रकर्षपर्य्यन्तजं योगिज्ञानञ्चेति ।"

न चेदं नानुमतं जैनानामपि । तदुक्तम् **आप्तमीमांसायाम्**,—

"सूक्ष्मान्तरितदूरार्थाः प्रत्यक्षाः कस्यचिद् यथा ।
अनुमेयत्वतोऽग्न्यादिरिति सर्वज्ञसंस्थितिः ॥"

**कणादरहस्यकृतस्तु** "सामान्यलक्षणा च प्रत्यासत्तिर्विशेषणताविशेष एव । भासन्ते ह्यतीतानागतधूमादयो धूमत्वसामान्यविशेषणतया सेयं संयुक्तसमवेत-विशेषणता । योगजधर्म्मश्च प्रत्यासत्त्यन्तरमेव तत्संस्कृतेन मनसाऽतीतानागतस्वरूपा-योग्यपरमाण्वाकाशादीनामनिरासात् । ज्ञानलक्षणा तु संयुक्तसमवेतविशेषणतैव । मनःसंयुक्तात्मसमवेतज्ञानविशेषणतया परमाणुप्रभृतीनामपि भानात् । भवति हि परमाणुमहं जानामीति प्रत्यक्षम् ।" इत्याहुः ।

( ३४ ) **तर्कभाषाव्याख्यानरूपे न्यायप्रदीपे**—"लिङ्गदर्शनव्याप्तिस्मृ-तिभ्यामेवानुमितिर्भवतीति कन्दलीकारादिमतं प्रतिक्षेप्तुमाह । एतच्चावश्याभ्यु-पेतव्यमिति ।" इति ग्रन्थेन श्रीधराचार्य्यमते परामर्शस्य नानुमितिकारणत्वमिति प्रतिपादितम् । परन्तु तत्रत्यभाष्यसन्दर्भेणापि तथा प्रतीतिर्भवतीति । उक्तञ्च प्रशस्तपादाचार्य्यैः—

"एवं प्रसिद्धसमयस्यासन्दिग्धधूमदर्शनात् साहचर्य्यानुस्मरणात् तदनन्तर-मग्न्यध्यवसायो भवतीति ।"

'पुरुषत्वव्याप्यकरादिमानयम्' इति परामर्शे सति 'पुरुष एव' इति प्रत्यक्षजननात्। न च तत्रानुमितिरेवेति वाच्यम्। 'पुरुषं साक्षात्करोमि' इत्यनुव्यवसायविरोधादिति चेत्, न, पक्षतासहकृतपरामर्शजन्यत्वस्य विवक्षितत्वात्। सिषाधयिषाविरहसहकृतसिद्ध्यभावः पक्षता। साध्यसिद्धिरनुमितिप्रतिबन्धिका सिद्धिसत्त्वेऽपि 'अनुमिनुयाम्' इतीच्छायामनुमितिदर्शनात् सिषाधयिषोत्तेजिका। ततश्चोत्तेजकाभावविशिष्टमण्यभावस्य दाहकारणत्ववत् सिषाधयिषाविरहकृतसिद्ध्यभावस्यापि अनुमितिकारणत्वम्।

व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्शः। यथा 'वह्निव्याप्यधूमवानयं पर्वत' इति ज्ञानं परामर्शः। तज्जन्यं 'पर्वतो वह्निमान्' इति ज्ञानमनुमितिः।

परामर्शं लक्षयति—व्याप्तीति। व्याप्तिविषयकं यत् पक्षधर्मताज्ञानं

**न्यायबोधिनी**

ज्ञानजन्यत्वे सति व्याप्तिज्ञानजन्यानुमितिजनकत्वाच्चज्जन्यत्वे सति तज्जन्यजनकत्वरूपव्यापारत्वमुपपन्नम्। अनुमितिकरणत्वमनुमानस्य लक्षणम्। अनुमानं व्याप्तिज्ञानम्। एतस्य परामर्शरूपव्यापारद्वारा अनुमितिं प्रत्यसाधारणकारणतयाऽनुमितिकरणत्वमुपपन्नम्।

परार्शजन्यमिति। परामर्शजन्यत्वविशिष्टज्ञानत्वमनुमितेर्लक्षणम्। अत्र ज्ञानत्वमात्रोपादाने प्रत्यक्षादावतिव्याप्तिः अतस्तद्वारणाय परामर्शजन्यत्वे सतीति विशेषणोपादानम्। परामर्शजन्यत्वमात्रोक्तौ परामर्शध्वंसेऽतिव्याप्तिरतस्तद्वारणाय ज्ञानत्वोपादानम्।

---

अत्र न्यायकन्दली व्याख्या—

"एवं प्रसिद्धसमयस्य प्रसिद्धाविनाभावस्य पुरुषस्यासन्दिग्धधूमदर्शनात् धूम एवायं न वाष्पादिकमितिज्ञानात् तदनन्तरमग्न्यध्यवसायः अग्न्यनुमानं भवति। नन्वेवं द्वितीयो (तृतीयो ?) लिङ्गपरामर्शो न लभ्यते, मालभ्भि, न हि नस्तेन प्रयोजनं लिङ्गदर्शनव्याप्तिस्मरणाभ्यामेवानुमेयप्रतीत्युपपत्तेः।"

क्वचिद् भाष्यपुस्तके "अग्न्यध्यवसायो भवतीत्य"नन्तरं "तत्परं तद्भवती"त्यधिकः पाठः समुपलभ्यते। तादृशपाठमनुसृत्य किरणावलीकारैरित्थं व्याख्यातम्,—

स परामर्श इत्यर्थः। परामर्शमभिनीय दर्शयति—यथेति। अनुमिति-मभिनीय दर्शयति—तज्जन्यमिति। परामर्शजन्यमित्यर्थः।

यत्र (यत्र) धूमस्तत्राग्निरिति साहचर्यनियमो व्याप्तिः (३५)।

व्याप्तेर्लक्षणमाह—यत्रेति। 'यत्र धूमः तत्राग्निः' इति व्याप्तेरभि-

न्यायबोधिनी

अनुमितिलक्षणघटकीभूतपरामर्शलक्षणमाचष्टे—व्याप्तिविशिष्टेति। व्याप्तिविशिष्टं च तत्पक्षताज्ञानञ्च इति कर्म्मधारये विशिष्टपदस्य प्रकारकपरत्वात् पक्षधर्मताज्ञानमित्यत्र षष्ठ्या विषयत्वबोधनात् धर्मतापदस्य सम्बन्धार्थकत्वात् कर्मधारयसमासे समस्यमानपदार्थयोरभेदसंसर्गलाभाच्च व्याप्तिप्रकारकाभिन्नं यत्पक्षसम्बन्धिविषयकं ज्ञानं तत्परामर्श इति लभ्यते। एवं सति 'धूमो वन्हिव्याप्यः आलोकवान्पर्वतः' इत्याकारकसमूहालम्बनेऽप्युक्तपरामर्शलक्षणमस्तीत्यतिव्याप्तिस्तद्वारणाय पक्षनिष्ठविशेष्यतानिरूपिता या हेतुनिष्ठा प्रकारता तन्निरूपिता या व्याप्तिनिष्ठा प्रकारता तच्छालिज्ञानं परामर्श इति निष्कर्षः। एतादृशपरामर्शजन्यत्वे सति ज्ञानत्वमनुमितेर्लक्षणम्। अनुमितिपरामर्शयोर्विशिष्य कार्यकारणभावश्चेत्थम्—पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितसंयोगसम्बन्धावच्छिन्नवन्हित्वावच्छिन्नविधेयताकानुमितित्वावच्छिन्नं प्रति वन्हित्वावच्छिन्नप्रकारतानिरूपितव्याप्तित्वावच्छिन्नप्रकारतानिरूपिता या धूमत्वावच्छिन्नप्रकारता तन्निरूपितपर्वतत्वावच्छिन्नविशेष्यता तच्छालिनिर्णयः कारणम्। वन्हित्वावच्छिन्नप्रकारतानिरूपितव्याप्तित्वावच्छिन्नविशेष्यतायाः धूमत्वावच्छिन्नविशेष्यतानिरूपितव्याप्तित्वावच्छिन्नप्रकारतायाश्चाभेदानङ्गीकर्तृमते वन्हित्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छिन्न व्याप्तित्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छिन्नधूमत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिनिर्णयः कारणमिति वाच्यम्। स च निर्णयः वह्निव्याप्यधूमवान्पर्वत इत्याकारको बोध्यः।

"........अन्यध्यवसायो भवतीति। अग्निरध्यवसीयतेऽनेनेति अध्यवसायः परामर्शः। तत्परं तद्भवति। प्रमाणं भवतीत्यर्थः।........." नूनं परामर्शोऽपि तृतीयः स्वीकर्त्तव्यः।"

(३५) व्याप्तेर्व्याप्यस्य च पर्यायाः—

"व्याप्तिर्नियमः प्रतिबन्धोऽव्यभिचारस्तथाऽविनाभावः।
व्याप्यं पुनर्नियम्यं गमकं लिङ्गं च साधनं हेतुः॥"—

(मानमेयोदये, २१ पृ०)

नयः । 'साहचर्यनियमः' इति लक्षणम् । साहचर्यं सामानाधिकरण्यं तस्य नियमः, हेतुसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यं व्याप्तिरित्यर्थः ।

व्याप्यस्य पर्वतादिवृत्तित्वं पक्षधर्मता ॥४३॥

पक्षधर्मतास्वरूपमाह—व्याप्यस्येति ।

अनुमानं द्विविधम्—स्वार्थं परार्थं च (३६) । तत्र स्वार्थं स्वानु-

अनुमानं विभजते—अनुमानमिति । तद्द्वैविध्यं दर्शयति—स्वार्थमित्यादिना । तत्रेति । उभयोर्मध्ये इत्यर्थः । स्वार्थानुमितिं दर्शयति—

न्यायबोधिनी

यत्र यत्रेति । यत्रपदवीप्सा धूमाधिकरणे यावति वह्निमत्त्वलाभाय । यावत्पदमहिम्ना वह्नेर्धूमव्यापकत्वं लब्धम् । तदेव स्पष्टयति—साहचर्यनियम इति । एतदर्थस्तु नियतसाहचर्यं व्याप्तिरिति नियतत्वं व्यापकत्वम् । साहचर्यं नाम सामानाधिकरण्यम् । तथा च धूमव्यापकवह्निसामानाधिकरण्यं व्याप्तिरित्यर्थः । अत्र वह्नेर्धूमव्यापकत्वं नाम धूमसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वम् । तथा हि धूमाधिकरणे पर्वतचत्वरमहानसादौ वर्तमानो योऽभावः घटत्वाद्यवच्छिन्नप्रतियोगिताकः न तु वह्नित्वावच्छिन्नप्रतियोगिताकाभावः । कुतः? पर्वतादौ वन्हेः सत्त्वात् । एवं सति धूमाधिकरणे पर्वतचत्वरादौ वर्तमानस्य घटाद्यभावस्य प्रतियोगितावच्छेदकं घटत्वादिकमनवच्छेदकं वह्नित्वं तद्वत्त्वं वह्नौ वर्त्ततेऽतो धूमव्यापकत्वं वह्नौ वर्तते । इयमन्वयव्याप्तिः सिद्धान्तानुसारेण । पूर्वपक्षव्याप्तिस्तु साध्याभाववदवृत्तित्वम् । साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यावच्छिन्नाभाववन्निरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभावो व्याप्तिरित्यर्थः । तच्च केवलान्वयिन्यव्याप्तमिति सिद्धान्तानुसरणम् ॥४३॥

---

(३६) ननु परार्थानुमाने शाब्दबोधात्मक एव साध्यनिर्णयो नानुमितिरिति कथमनुमानद्वैविध्यम् इति चेन्न, वादिवचनस्याप्रामाण्यशङ्काकलङ्कितत्वेन

मितिहेतुः । तथा हि—स्वयमेव भूयोदर्शनेन यत्र धूमस्तत्राग्निरिति महानसादौ व्याप्तिं गृहीत्वा पर्वतसमीपं गतः तद्गते चाग्नौ संदिहानः पर्वते धूमं पश्यन् व्याप्तिं स्मरति 'यत्र धूमस्तत्राग्नि'रिति, तदनन्तरं 'वह्निव्याप्यधूमवानयं पर्वत' इति ज्ञानमुत्पद्यते अयमेव लिङ्गपरामर्श उच्यते । तस्मात् 'पर्वतो वह्निमान्' इति ज्ञानमनुमितिरुत्पद्यते । तदेतत्स्वार्थानुमानम् ।

स्वयमेवेति । भूयोदर्शनेनेति । ननु पार्थिवत्वलोहलेख्यत्वादौ शतशः सहचारदर्शनेऽपि मण्यादौ व्यभिचारोपलब्धेर्भूयोदर्शनेन कथं व्याप्तिग्रह इति चेत् , न , व्यभिचारज्ञानविरहसहकृतसहचारज्ञानस्य व्याप्तिग्राहकत्वात् ।

व्यभिचारज्ञानं द्विविधम्—निश्चयः, शङ्का च ।। तद्विरहः क्वचित्तर्कात् । क्वचित् स्वतः सिद्ध एव । धूमाग्न्योर्व्याप्तिग्रहे कार्यकारणभावभङ्गप्रसङ्गलक्षणस्तर्को व्यभिचारशङ्कानिवर्तकः । ननु सकलवह्निधूमयोरसन्निकर्षात्कथं व्याप्तिग्रह इति चेत् , न, वह्नित्वधूमत्वरूपसामान्यप्रत्यासत्त्या सकलवह्निधूमज्ञानसम्भवात् । तस्मादिति । लिङ्गपरामर्शादित्यर्थः ।

## न्यायबोधिनी

अनुमानं विभजते—स्वार्थमिति । स्वार्थानुमानं नाम न्यायाप्रयोज्यानुमानम् ।

न्यायप्रयोज्यानुमानं परार्थानुमानम् । न्यायत्वं च प्रतिज्ञाद्यवयवपञ्चकसमुदायत्वम् । अवयवत्वं च प्रतिज्ञाद्यन्यतमत्वम् ।

---

निर्णयाजनकत्वात् पञ्चावयवपूरणानन्तरं मनसा बाधकाभावप्रतिसन्धाने सति वादिसम्पादितव्याप्तिज्ञानादिवशान्मानसपरामर्शोत्तरमनुमित्यभ्युपगमात् । अन्यथा तत्र प्रतिज्ञामात्रेणैव साध्यनिश्चयसम्भवे हेतुप्रयोगादीनामानर्थक्यं प्रसज्येत । तदुक्तं न्यायकन्दल्याम्,—"न वाक्यमेव साध्यं बोधयति, तस्य शाब्दत्वप्रसङ्गात् ।"

यत्तु स्वयं धूमादग्निमनुमाय परप्रतिपत्त्यर्थं पञ्चावयववाक्यं प्रयुज्यते, तत्परार्थानुमानम् । यथा पर्वतो वह्निमान । धूमवत्त्वात् । यो यो धूमवान् स सोऽग्निमान् यथा महानसम् । तथा चायम् । तस्मात्तथा । इति । अनेन प्रतिपादिताल्लिङ्गात्परोऽप्यग्निं प्रतिपद्यते । प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि पञ्चावयवाः । पर्वतोऽग्निमानिति प्रतिज्ञा । धूमवत्त्वादिति हेतुः । यो यो धूमवान्स सोऽग्निमान् यथा महानसम् इत्युदाहरणम् तथा चायमित्युपनयः । तस्मात्तथेति निगमनम् (३७) ॥४४॥

परार्थानुमानमाह—यत्त्विति । यच्छब्दस्य 'तत्परार्थानुमानम्' इति तच्छब्देनान्वयः । पञ्चावयववाक्यमुदाहरति–यथेति । अवयवस्वरूपमाह–प्रतिज्ञेति । उदाहृतवाक्येषु प्रतिज्ञादिविभागमाह—पर्वतो वह्निमानिति । साध्यवत्तया पक्षवचनं प्रतिज्ञा । पञ्चम्यन्तं लिङ्गप्रतिपादकं वचनं हेतुः । व्याप्तिप्रतिपादकं वचनमुदाहरणम् । व्याप्तिविशिष्टलिङ्गप्रतिपादकं वचन-

---

(३७) एत एव **प्रशस्तपादभाष्ये** प्रतिज्ञाऽपदेशनिदर्शनाऽनुसन्धानप्रत्याम्नायशब्देन प्रदर्शिताः ।

**मीमांसकास्तु** त्रय एवावयवाः प्रयोज्या उदाहरणान्तास्तदाद्या वेत्याहुः । एवं **वेदान्तिनोऽपि** ।

केचन प्राञ्चो नैयायिका दशावयववादिन आसन् । तदुक्तं **न्यायभाष्ये**—

"दशावयवानेके नैयायिका वाक्ये सञ्चक्षते । जिज्ञासासंशयः शक्यप्राप्तिः प्रयोजनं संशयव्युदास इति ।"

यो धूमवान् सोऽग्निमान् यथा महानसम्, धूमवांश्चायमित्येतावदुक्तौ तस्मादग्निमान् इत्यर्थात् सिध्यति । अत उदाहरणोपनयौ द्वावेवावयवाविति सौगतमतम् ।

जैननये च द्वावेवावयवौ । तदुक्तं **न्यायदीपिकायाम्**, "द्वावयवौ प्रतिज्ञाहेतुश्चे"ति ।

परन्तु पञ्चावयवा एव पुराणकारादिभिरनुमता दृश्यन्ते । तथा च **विष्णुधर्मोत्तरे**—

"प्रतिज्ञाहेतुदृष्टान्तावुपसंहार एव च ।
तथा निगमनं चैव पञ्चावयवमिष्यते ॥"(३।५।५)

मुपनयः। हेतुसाध्यवत्तया पक्षप्रतिपादकं वचनं निगमनम्। पक्षज्ञानं प्रतिज्ञाप्रयोजनम्। लिङ्गज्ञानं हेतुप्रयोजनम्। व्याप्तिज्ञानमुदाहरणप्रयोजनम्। पक्षधर्मज्ञानमुपनयप्रयोजनम्। अबाधितत्वादिकं निगमनप्रयोजनम्।

**स्वार्थानुमितिपरार्थानुमित्योर्लिङ्गपरामर्श एव करणम्। तस्माल्लिङ्गपरामर्शोऽनुमानम् ॥४५॥**

अनुमितिकरणमाह–स्वार्थेति। ननु व्याप्तिस्मृतिपक्षधर्मताज्ञानाभ्यामेव अनुमितिसम्भवे विशिष्टपरामर्शः किमर्थमङ्गीकर्तव्य इति चेत्, न, 'वह्निव्याप्यधूमवानयम्' इति शाब्दपरामर्शस्थले परामर्शस्यावश्यकतया लाघवेन सर्वत्र परामर्शस्यैव कारणत्वात्। लिङ्गं न करणम्। अतीतानागतादौ व्यभिचारात् (३८)। 'व्यापारवत्कारणं करणम्' इति मते परामर्श-

---

वैद्यकशास्त्रेऽपि पञ्चावयवा एव गृहीताः। तदुक्तं **चरकसंहितायाम्**— "प्रतिज्ञा नाम साध्यवचनम्। अथ स्थापना। स्थापना नाम तस्या एव प्रतिज्ञाया हेतुदृष्टान्तोपनयनिगमैः स्थापना।...... यथा नित्यः पुरुष इति प्रतिज्ञा, हेतुः अकृतकत्वादिति। दृष्टान्तः अकृतकमाकाशम्, तच्च नित्यम्। उपनयः, यथा चाकृतकमाकाशं तथा पुरुषः। निगमनं, तस्मान्नित्य इति।"—(विमानस्थानम्, ८।१।२२–२१)

(३८) अत्रोक्तं **दीपिकाप्रकाशे** नीलकण्ठभट्टैः—

"विनिगमनाविरहेण ज्ञायमानलिङ्गत्वेनापि करणत्वं वदतामाचार्याणां मतं निरस्यति—**लिङ्गं न करणमिति**।"

इदमत्रावधेयम्—न केवलमुदयनाचार्य्यमत एव लिङ्गं करणं किन्तु महर्षिकणादादिमतेऽपि। तथा च **वैशेषिकसूत्रम्**—

"हेतुरपदेशो लिङ्गं प्रमाणं करणमित्यनर्थान्तरम्।"—(९।२।४)

अत एव तत्र तत्र **उपस्कार**कारैरभिहितम्,—"एतेन लिङ्गमेवानुमितिकरणं न तु तस्य परामर्शः, तस्य निर्व्यापारत्वेनाकरणत्वात्, लिङ्गस्य तु स एव व्यापारः।" इति। एवञ्च **प्रशस्तपादभाष्येऽपि**—

"अनुमेयेन सम्बद्धं प्रसिद्धञ्च तदन्विते।
तदभावे च नास्त्येव तल्लिङ्गमनुमापकम् ॥"

इति लिङ्गस्यैवानुमितिकरणत्वमुक्तम्। अत्रैव व्याख्यातमाचार्य्योदयनेन—"अनुमितिरूपप्रमाकरणम्। एतेन परामृष्यमाणं लिङ्गमनुमानम्।" इति।

द्वारा व्याप्तिज्ञानं करणम्। तज्जन्यत्वे सति तज्जन्यजनको व्यापारः। अनुमानमुपसंहरति—तस्मादिति।

लिङ्गं त्रिविधम्। अन्वयव्यतिरेकि केवलान्वयि केवलव्यतिरेकि चेति। अन्वयेन व्यतिरेकेण च व्याप्तिमदन्वयव्यतिरेकि। यथा

लिङ्गं विभजते—लिङ्गमिति। अन्वयव्यतिरेकि लक्षयति—अन्वयेनेति। हेतुसाध्ययोर्व्याप्तिरन्वयव्याप्तिः, तदभावयोर्व्याप्तिर्व्यतिरेकव्याप्तिः।

## न्यायबोधिनी

अन्वयेनेति। व्यापकसामानाधिकरण्यरूपव्याप्तिमानित्यर्थः। व्यतिरेकेणेति। व्यतिरेको नामाभावः। तथा च साध्याभावहेत्वभावयोर्व्याप्तिर्व्यतिरेकव्याप्तिः। इयं च व्याप्तिर्यत्र यत्र वह्न्यभावस्तत्र तत्र धूमाभाव इति। यत्रपदवीप्सया वह्न्यभाववति यावति धूमाभावग्रहणे यावत्पदस्य व्यापकत्वपरतया धूमाभावे वह्न्यभावव्यापकत्वं लभ्यते। एवं च वह्न्यभावनिष्ठव्याप्तेः स्वाश्रयीभूतवह्न्यभावव्यापकीभूताभावप्रतियोगित्वसम्बन्धेन धूमनिष्ठतया व्यतिरेकव्याप्तिमत्त्वेन धूमव्यापकवह्निसामानाधिकरण्यरूपान्वयव्याप्तिमत्त्वेन चान्वयव्यतिरेकित्वेन गीयते। व्यतिरेकपरामर्शस्तु वह्न्यभावव्यापकीभूताभावप्रतियोगिधूमवान् पर्वत इत्याकारकः।

---

"मितेन लिङ्गेन लिङ्गिनोऽर्थस्य पश्चान्मानमनुमानम्।" (१।१।३)—इति न्यायभाष्यसन्दर्भदर्शनात वात्स्यायनमतेऽपि तादृशं लिङ्गमेव करणमिति प्रतीयते।

ज्ञायमानलिङ्गस्य करणत्वे चैत्रीयपरामर्शविषयलिङ्गान्मैत्रस्यापि अनुमितिप्रसङ्गः। तत्तत्पुरुषीयत्वप्रवेशे गौरवमित्यपि दूषणमनुसन्धेयम्। वस्तुतस्तन्मतेऽपि क्वचित् परामर्शस्यापि करणत्वमङ्गीकार्य्यम्। तदुक्तं जगदीशैरनुमानस्वरूपप्रकरणे—"कार्य्यमात्रं प्रत्यकारणपारिमाण्डल्यादावेवानुमितिकरणेतरत्वस्य प्रसिद्धिसौलभ्यादाचार्य्यमतेऽपि तद्धेतुकानुमितौ परामर्शस्यैव करणत्वात्।" इति। अत एव "लिङ्गपरामर्शोऽनुमानमित्याचार्य्याः।" इति तार्किकरक्षाकारोक्तिस्तत्रत्या "उदयनाचार्य्यैरपीदमेव लक्षणं भङ्गयन्तरेणोक्तमित्याह लिङ्गेति।" इति मल्लिनाथकृता निष्कण्टका टीकापि सङ्गच्छेते।

वह्नौ साध्ये धूमवत्त्वम् । यत्र धूमस्तत्राग्निरिति अन्वयव्याप्तिः । यत्र वह्निर्नास्ति तत्र धूमोऽपि नास्ति यथा महाह्रद इति व्यतिरेकव्याप्तिः । अन्वयमात्रव्याप्तिकं केवलान्वयि । यथा घटोऽभिधेयः प्रमेयत्वात् पटवत् । अत्र प्रमेयत्वाभिधेयत्वयोर्व्यतिरेकव्याप्तिर्नास्ति सर्वस्यैव प्रमेयत्वादभिधेयत्वाच्च । व्यतिरेकमात्रव्याप्तिकं केवलव्यतिरेकि । यथा पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वात् ; यदितरेभ्यो न भिद्यते न तद्गन्धवत् । यथा जलम् । न चेयं तथा । तस्मात् न तथेति । अत्र यद्गन्धवत् तदितरभिन्नमित्यन्वयदृष्टान्तो नास्ति पृथिवीमात्रस्य पक्षत्वात् ॥४६॥

केवलान्वयिनो लक्षणमाह—अन्वयेति । केवलान्वयिसाध्यकं लिङ्गं केवलान्वयि । अत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वम् । केवलान्वयि उदाहरति—घटोऽभिधेयः प्रमेयत्वादिति । ईश्वरप्रमाविषयत्वं सर्वपदाभिधेयत्वं च सर्वत्रास्तीति व्यतिरेकाभावः । केवलव्यतिरेकिणो लक्षणमाह—व्यतिरेकेति । केवलव्यतिरेकि उदाहरति—पृथिवीति ।

### न्यायबोधिनी

केवलान्वयिनो लक्षणमाह—अन्वयेति । व्यतिरेकव्याप्तिशून्यत्वे सति अन्वयव्याप्तिमत्त्वं केवलान्वयित्वम् । अथवा केवलान्वयिसाध्यकत्वं तत् । एतच्च लक्षणं हेतोर्व्यतिरेकित्वेऽपि सङ्गच्छते । साध्यस्य केवलान्वयित्वादेव व्यतिरेकव्याप्तेरभावा'दन्वयमात्रव्याप्तिकं केवलान्वयी'ति मूलकारोक्तं लक्षणमुपपन्नम् । अत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वम् । न चात्यन्ताभावाप्रतियोगित्वरूपकेवलान्वयित्वमाकाशाभावे संयोगाभावे चाव्याप्तमिति वाच्यम्, स्वविरोधिवृत्तिमदत्यन्ताभावाप्रतियोगित्वस्यैव तदर्थत्वात् । एकजातीयसम्बन्धेन सर्वत्र विद्यमानत्वं केवलान्वयित्वमिति नव्याः ।

केवलव्यतिरेकिणो लक्षणमाह—व्यतिरेकेति । निश्चितान्वयव्याप्तिशून्यत्वे सति व्यतिरेकव्याप्तिमत्त्वं केवलव्यतिरेकित्वम् । यथा पृथिवीति । अत्र पृथिवीत्वावच्छिन्नं पक्षः, पृथिवीतरजलाद्यष्टभेदः साध्यम्, गन्धवत्त्वं हेतुः । अत्र यद्गन्धवत्तदितरभेदवदित्यन्वयदृष्टा-

नन्वितरभेदः प्रसिद्धो न वा। आद्ये यत्र प्रसिद्धस्तत्र हेतुसत्त्वे अन्वयित्वम्। असत्त्वे असाधारण्यम्। द्वितीये साध्यज्ञानाभावात् कथं तद्विशिष्टानुमितिः। विशेषणज्ञानाभावे विशिष्टज्ञानानुदयात्। प्रतियोगिज्ञानाभावाद्व्यतिरेकव्याप्तिज्ञानमपि न स्यादिति चेत्, न, जलादित्रयोदशान्योन्याभावानां त्रयोदशसु प्रत्येकं प्रसिद्धानां मेलनं पृथिव्यां साध्यते। त्रयोदशत्वावच्छिन्नसाध्यस्यैकाधिकरणवृत्तित्वाभावान्नान्वयित्वासाधारण्ये। प्रत्येकाधिकरणप्रसिद्ध्या साध्यविशिष्टानुमितिः। साध्याभावव्यापकीभूताभावप्रतियोगित्वमिति व्यतिरेकव्याप्तिनिरूपणं च यदितरेति।

सन्दिग्धसाध्यवान् पक्षः। यथा धूमवत्त्वे हेतौ पर्वतः।

पक्षलक्षणमाह—सन्दिग्धेति। ननु श्रवणानन्तरभाविमननस्थले अव्याप्तिः, तत्र वेदवाक्यैरात्मनो निश्चितत्वेन सन्देहाभावात्। किञ्च प्रत्यक्षेऽपि

न्यायबोधिनी

न्ताभावाद्गन्धव्यापकेतरभेदसामानाधिकरण्यरूपान्वयव्याप्तिग्रहासम्भवात्। किन्तु यत्र यत्र पृथिवीतरभेदाभावस्तत्र तत्र गन्धाभावो यथा जलादिकमिति व्यतिरेकदृष्टान्ते जलाद्यावितरभेदाभावरूपसाध्यभावव्यापकता गन्धाभावे गृह्यते। इममेवार्थं मनसि निधाय 'यदितरेभ्यो न भिद्यते न तद्गन्धवत् यथा जल'मिति ग्रन्थेन मूलकारो व्यतिरेकव्याप्तिमेव प्रदर्शितवान्। एवम्प्रकारेण व्यतिरेकव्याप्तिग्रहानन्तरमितरभेदाभावव्यापकीभूताभावप्रतियोगिगन्धवती पृथिवीत्याकारकव्यतिरेकिपरामर्शात्पृथिवीत्वावच्छिन्नोद्देश्यतानिरूपितेतरभेदत्वावच्छिन्न - विधेयताका पृथिवी इतरभेदवतीत्याकारकानुमितिर्जायत इति तत्त्वम्। यथाश्रुतमूलार्थस्तु—यथा जलमिति। यत् जलं इतरेभ्यो न भिद्यते इतरभेदाभाववत्, न तद्गन्धवत् जलमितरभेदाभावव्यापकगन्धाभाववत्। इत्येवम्प्रकारेण गन्धाभावनिरूपिता व्याप्यता इतरभेदाभावे गृह्यत इत्यर्थः। न चेयं तथेति। इयं पृथिवी, न तथा इतरभेदाभावव्यापकगन्धाभाववती न किन्तु तदभावात्मकगन्धवती। तस्मान्न तथेतीति। तस्मात्—गन्धाभावाभाववत्त्वात्। तच्छब्देन गन्धाभावाभावरूपस्य गन्धस्य परामर्शेन तस्मादिति पञ्चम्यन्तात् गन्धाभावाभाववत्त्वादित्यर्थोपलब्धिः। न तथा—इतरभेदाभाववती न किन्तु इतरभेदाभावाभाववती, इतरभेदवतीत्यर्थः ॥४६॥

निश्चितसाध्यवान् सपक्षः। यथा तत्रैव महानसम्। निश्चितसाध्योभाववान् विपक्षः। यथा तत्रैव महाह्रदः॥४७॥

वन्हौ यत्रेच्छयानुमितिः, तत्राव्याप्तिरिति चेत्, न, उक्तपक्षताश्रयत्वस्य पक्षलक्षणत्वात्। सपक्षलक्षणमाह—निश्चितेति। विपक्षलक्षणमाह—निश्चितेति।

सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधिताः पञ्च हेत्वाभासाः(३९)। सव्यभिचारोऽनैकान्तिकः। स त्रिविधः—साधारणासाधारणानुपसंहारिभेदात्।

एवं सद्धेतून् निरूप्य असद्धेतून् निरूपयितुं विभजते—सव्यभिचा-

न्यायबोधिनी

पक्षलक्षणमाह—सन्दिग्धेति। साध्यप्रकारसन्देहविशेष्यत्वं पक्षत्वम्। सन्देहश्च पर्वतो वह्निमान्न वेत्याकारः। इदञ्च लक्षणमनुमितेः पूर्वं साध्यसन्देहो नियमेन जायत इत्यभिप्रायेण प्राचीनैः कृतम्। गगनविशेष्यकमेघप्रकारकसन्देहाभावदशायामपि गृहमध्यस्थपुरुषस्य घनगर्जितश्रवणेन गगनं मेघवदित्याकारिकाया गगनत्वावच्छिन्नोद्देश्यतानिरूपितमेघत्वावच्छिन्नविधेयताकाया अनुमितेर्दर्शनात्प्राचीनलक्षणं विहाय नवीनैरनुमित्युद्देश्यत्वं पक्षत्वमिति स्थिरीकृतम्।

सपक्षलक्षणमाह—निश्चितेति। साध्यप्रकारकनिश्चयविशेष्यत्वं सपक्षत्वम्। निश्चयश्च महानसं वह्निमदित्याकारकः। विपक्षलक्षणमाह—निश्चितसाध्याभावेति। साध्याभावप्रकारनिश्चयविशेष्यत्वं विपक्षत्वम्। निश्चयश्च ह्रदो वह्न्यभाववानित्याकारकः॥ ४७॥

एवं सद्धेतून्निरूप्य हेत्वाभासान्निरूपयति—सव्यभिचारेति। हेतुवदाभासन्त इति हेत्वाभासाः। दुष्टहेतव इत्यर्थः। दोषाश्च व्यभि-

(३९) एत एव पारमर्षसूत्रे सव्यभिचारविरुद्धप्रकरणसमसाध्यसमकालातीतशब्दैरुक्ताः। तथा च गौतमसूत्रम्—

"सव्यभिचारविरुद्धप्रकरणसमसाध्यसमकालातीता हेत्वाभासाः।"

—(१।२।४)

वैशेषिकमते च ते चत्वार एव। तदुक्तं प्रशस्तपादभाष्ये—"एतेनासिद्धविरुद्धसन्दिग्धानध्यवसितवचनानामनपदेशत्वमुक्तं भवती"ति। तत्रासिद्धश्चतुर्विधः। उभयासिद्धोऽन्यतरासिद्धस्तद्भावासिद्धोऽनुमेयासिद्धश्चेति।

रेति । अनुमितिप्रतिबन्धकयथार्थज्ञानविषयत्वं हेत्वाभासत्वम् । सव्यभिचारं विभजते—स त्रिविध इति ।

न्यायबोधिनी

चारविरोधसत्प्रतिपक्षासिद्धिबाधाः । एकज्ञानविषयप्रकृतहेतुतावच्छेदकसम्बन्धेन एतद्विशिष्टा हेतवो दुष्टहेतव इत्यर्थः । यद्विषयकत्वेन ज्ञानस्यानुमितितत्करणान्यतरप्रतिबन्धकत्वं तत्त्वं दोषसामान्यस्य लक्षणम् । हेतौ दोषज्ञाने सत्यनुमितिप्रतिबन्धो जायते व्याप्तिज्ञानप्रतिबन्धो वा, अतो वादिनिग्रहाय वादिनोद्भाविते हेतौ दोषोद्भावनार्थं दुष्टहेतुनिरूपणमित्यर्थः ।

---

शब्दोऽनित्यः सावयत्वादित्याद्यः । तत्रैव कार्य्यत्वहेतुरन्यतरासिद्धः, विप्रतिपन्नेन मीमांसकेन शब्दे कार्य्यत्वहेतोरनभ्युपगतत्वात् । स्वरूपासिद्ध एव तद्भावासिद्धः । तदुक्तं **न्यायकन्दल्याम्**,—"धूमभावेनाग्र्यधिगतौ कर्त्तव्यायामुपन्यस्यमानो वाष्पो धूमभावेन धूमस्वरूपेणासिद्धः तद्भावासिद्ध इत्युच्यते ।" अत एव च **पदार्थदीपिकायां** "तत्रासिद्धश्चतुर्धा उभयासिद्धोऽन्यतरासिद्ध. स्वरूपासिद्धोऽनुमेया सिद्धश्चे"ति विधाः प्रदर्शिताः । आश्रयासिद्धस्तुरीयः । तथा च **कन्दलीग्रन्थः**. "तमो द्रव्यं पार्थिवं कृष्णरूपवत्त्वादिति अनुमेयासिद्धम् आश्रयासिद्धम् अनुमेयमसिद्धं यस्येत्यसिद्धानुमेयमिति प्रासावाहिताग्न्यादित्वान्निष्ठायाः पूर्वनिपातः ।" अनुमेयासिद्धो बाधित इति तु पदार्थदीपिकाकारैरुक्तम् । विरुद्धश्च अयमश्वो विषाणित्वादिति । इदं भाष्योक्तमुदाहरणं विपक्षैकदेशवृत्तेर्विरुद्धस्य, विषाणित्वस्य सर्वत्राऽनश्वे स्तम्भादावसम्भवात् । **तर्कसंग्रहे** प्रदर्शितमुदाहरणं तु—"समस्तविपक्षव्यापकस्य विरुद्धस्योदाहरणं नित्यः शब्दः कृतकत्वादिति द्रष्टव्यम् ।" इति ग्रन्थेन **कन्दलीकारै**. स्वहस्तितम् ।

साधारणोऽनैकान्तिकः साध्यतदभावसहचारेणोभयसन्देहजनकत्वात् सन्दिग्धः । असाधारण एवाऽनध्यवसितः । तदुक्तं **न्यायकन्दल्याम्**,—"अनध्यवसित इत्यसाधारणो हेत्वाभास' । इति ।

सौगतमते तु त्रयो हेत्वाभासाः । तथा च **धर्म्मकीर्त्तिः**—

"......असिद्धविरुद्धानैकान्तिकास्त्रयो हेत्वाभासाः ।

—( न्यायबिन्दुः, तृतीयपरि० )

एत एव श्वेताम्बरैरप्यङ्गीकृताः । तदुक्तं **प्रमाणनयतत्त्वालोकालङ्कारे**—"असिद्धविरुद्धानैकान्तिकास्त्रयो हेत्वाभासाः ।"—( ६ । ४७ )

दिगम्बरमते च चत्वारो हेत्वाभासाः । तदुक्तं **परीक्षामुखसूत्रे**—हेत्वाभासा असिद्धविरुद्धानैकान्तिकाकिञ्चित्कराः ।"—( ६ । २१ )

तत्र साध्याभाववद्वृत्तिः साधारणोऽनैकान्तिकः। यथा पर्वतोऽग्निमान् प्रमेयत्वादिति, प्रमेयत्वस्य वह्न्यभाववति ह्रदे विद्यमानत्वात्। सर्वसपक्षविपक्षव्यावृत्तः पक्षमात्रवृत्तिरसाधारणः। यथा शब्दोऽनित्यः शब्दत्वादिति। शब्दत्वं हि सर्वेभ्यो नित्येभ्योऽनित्येभ्यो व्यावृत्तं शब्दमात्रवृत्ति। अन्वयव्यतिरेकदृष्टान्तरहितोऽनुपसंहारी। यथा सर्वमनित्यं प्रमेयत्वादिति। अत्र सर्वस्यापि पक्षत्वात् दृष्टान्तो नास्ति।

साधारणं लक्षयति—तत्रेति। उदाहरति—यथेति। असाधारणं लक्षयति—सर्वेति। अनुपसंहारिणो लक्षणमाह—अन्वयेति।

न्यायबोधिनी

सव्यभिचारं विभज्य दर्शयति—साधारणेति। साधारणाद्यन्यतमत्वं सव्यभिचारसामान्यलक्षणम्। साधारणत्वं—साध्याभाववद्वृत्तित्वम्। वह्निमान् प्रमेयत्वादित्यत्र प्रमेयत्वहेतौ वह्न्यभाववद्वृत्तित्वरूपव्यभिचारे ज्ञाते वह्न्यभाववदवृत्तित्वरूपव्याप्तिज्ञानप्रतिबन्धः फलम्।

असाधारण इति। सर्वसपक्षव्यावृत्तत्वं निश्चितसाध्यवदवृत्तित्वम्। साध्यवदवृत्तित्वं च साध्यासामानाधिकरण्यम्। हेतौ साध्यासामानाधिकरण्ये निश्चिते साध्यसामानाधिकरण्यरूपव्याप्तिज्ञानप्रतिबन्धः फलम्।

अनुपसंहारिणं लक्षयति—अन्वयेति। उभयत्र दृष्टान्ताभावादन्वय-

---

एतेषामवान्तरभेदा उदाहरणानि च ग्रन्थविस्तरभिया नात्र प्रदर्शितानि।

अप्रयोजको नाम षष्ठो हेत्वाभास इति केचित्। तदुक्तं न्यायमञ्जर्याम्,—"नन्वप्रयोजको नाम षष्ठो हेत्वाभासः समस्तीति न पुनरपि पञ्चत्वम्। न, तस्यान्यथासिद्ध एवान्तर्भावं वक्ष्यामः।" इति।

मानमेयोदयेऽपि नारायणभट्टाः—"ये पुनरनुकूलतर्काभावे हेतोः प्रयोजकत्वं नास्तीत्यप्रयोजकं नाम हेत्वाभासान्तरमातिष्ठन्ते, तेऽपि व्याप्यत्वासिद्धमेव तथा मन्यन्ते। सर्वेष्वप्यनुमानेष्वनुकूलतर्कैर्व्यभिचारशङ्कामपास्य निरुपाधिकत्वं स्थापनीयम्। ततस्तदभावे निरुपाधिकसम्बन्धानिश्चयाद् व्याप्यसिद्धिरेव। सोऽयं व्याप्यसिद्धो हेतुरुपाधिमानित्यन्यथासिद्ध इत्यप्रयोजक इति परप्रयुक्तव्याप्त्युपजीवीति सन्दिग्धव्याप्तिक इति च व्यपदिश्यते न त्वाभासान्तरमिति।"
—(३८ पृ०) इत्याहुः

साध्याभावव्याप्तो हेतुर्विरुद्धः ॥ यथा शब्दो नित्यः कृतकत्वादिति । कृतकत्वं हि नित्यत्वाभावेनानित्यत्वेन व्याप्तम् । यस्य साध्याभावसाधकं हेत्वन्तरं विद्यते स सत्प्रतिपक्षः । यथा शब्दो नित्यः श्रावणत्वात् शब्दत्ववत् । शब्दोऽनित्यः कार्यत्वात् घटवदिति । असिद्धस्त्रिविधः—आश्रयासिद्धः स्वरूपासिद्धो व्या-

विरुद्धं लक्षयति—साध्येति । सत्प्रतिपक्षं लक्षयति—यस्येति । असिद्धं विभजते—असिद्ध इति । आश्रयासिद्धमुदाहरति—गगनेति । स्वरूपासिद्धमुदाहरति—शब्द इति ।

### न्यायबोधिनी

व्याप्तिज्ञानव्यतिरेकव्याप्तिज्ञानोभयसामग्री नास्तीत्यर्थः । सर्वस्यैव पक्षत्वात्पक्षातिरिक्ताप्रसिद्धेरिति भावः । किञ्चिद्विशेष्यकनिश्चयाविषयकसाध्यकत्वे सति किञ्चिद्विशेष्यकनिश्चयाविषयकसाध्याभावकत्वमेवानुपसंहारित्वम् । एतदीयज्ञानस्य व्याप्तिसंशयजननद्वारा व्याप्तिज्ञानप्रतिबन्धः फलम् । वस्तुतस्तु अत्यन्ताभावाप्रतियोगिसाध्यादिकमेवानुपसंहारित्वमिति बोध्यम् ।

विरुद्धं लक्षयति—साध्याभावव्याप्त इति । साध्याभावव्याप्तिः साध्याभावनिरूपितव्यतिरेकव्याप्तिः साध्यव्यापकीभूताभावप्रतियोगित्वम् । तथा च पक्षविशेष्यकसाध्याभावव्याप्यहेतुप्रकारकज्ञानात् पक्षविशेष्यकसाध्यप्रकारकानुमितिप्रतिबन्धः फलम् । एवं सत्प्रतिपक्षे-

---

अनध्यवसितोऽपि हेत्वाभास इति भासर्वज्ञाः । तदाहुः साध्यासाधकः पक्ष एव वर्त्तमानो हेतुरनध्यवसितः । यथा नित्या भूर्गन्धवत्त्वात् इति । अयमसाधारण एव न चास्य हेत्वाभासान्तरत्वमिति ब्रूमः ।

कौमारिलमते च असिद्धो विरुद्धोऽनैकान्तिकोऽसाधारणश्चेति चत्वारो हेत्वाभासाः । लक्षणोदाहरणानि च तत्र तत्र द्रष्टव्यानि ।

बौद्धजैनाद्यङ्गीकृताः पक्षाभासादयः पृथङ् न लक्षिताः सूत्रकारैरिति न तेषां न्यूनत्वदोषः शङ्कनीयः, यथोक्त हेत्वाभासैरेव तेषां गतार्थत्वात् । तदुक्तं न्यायमञ्जर्याम्,—

"अत एव च शास्त्रेऽस्मिन् मुनिना तत्त्वदर्शिना ।
पक्षाभासादयो नोक्ता हेत्वाभासास्तु दर्शिताः ॥"

प्यत्वासिद्धश्चेति। आश्रयासिद्धो यथा—गगनारविन्दं सुरभि अरविन्दत्वात् सरोजारविन्दवदिति। अत्र गगनारविन्दमाश्रयः स च नास्त्येव। स्वरूपासिद्धो यथा—शब्दोऽनित्यश्चाक्षुषत्वात् रूपवदिति। अत्र चाक्षुषत्वं पक्षे नास्ति शब्दस्य श्रावणत्वात्।

सोपाधिको हेतुर्व्याप्यत्वासिद्धः (४०)। साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधिः। साध्यसमानाधिकरणात्यन्ताभावा-

व्याप्यत्वासिद्धस्य लक्षणमाह—सोपाधिक इति। उपाधेर्लक्षणमाह—साध्येति। उपाधिश्चतुर्विधः—केवलसाध्यव्यापकः, पक्षधर्मावच्छिन्नसा-

न्यायबोधिनी

ऽपि। विरुद्धसत्प्रतिपक्षयोर्विशेषस्तु विरुद्धहेतोरेकत्वेन सत्प्रतिपक्षहेतोर्द्वित्वेन च ज्ञातव्यः। साध्याभावव्याप्यप्रतिहेतुमत्पक्षस्तत्प्रतिपक्ष इति यावत्। साध्याभावसाधकहेतुः साध्यसाधकत्वेनोपन्यस्त इत्यसामर्थ्यसूचनमपि।

आश्रयासिद्ध इति। आश्रयासिद्धिर्नाम पक्षतावच्छेदकविशिष्टपक्षाप्रसिद्धिः। यथेति। अत्रारविन्दे गगनीयत्वाभावे निश्चिते गगनीयत्वविशिष्टारविन्दे सौरभ्यानुमितिप्रतिबन्धः फलम्।

स्वरूपासिद्ध इति। स्वरूपासिद्धिर्नाम पक्षे हेत्वभावः। तथा च हेत्वभावविशिष्टपक्षज्ञानात्पक्षविशेष्यकहेतुप्रकारकपरामर्शानुपपत्त्या परामर्शप्रतिबन्धः फलम्।

व्याप्यत्वासिद्ध इति। प्रकृते धूमव्यापकत्वमार्द्रेन्धनसंयोगे गृहीतं

---

(४०) विश्वनाथास्तु—"व्याप्यत्वासिद्धिरपरा नीलधूमादिके भवेत्। नीलधूमत्वं गुरुतया न हेतुतावच्छेदकम्, समानाधिकरणव्याप्यतावच्छेदकधर्मान्तराघटितस्यैव व्याप्यतावच्छेदकत्वात्।" इत्याहुः।

"व्याप्यतावच्छेदकाभाववान् हेतुर्व्याप्यत्वासिद्धः। यथा पर्वतो वह्निमान् काञ्चनमयधूमादिति। अत्र च धूमे व्याप्यत्वावच्छेदकत्वेनाभिमतं काञ्चनमयत्वं नास्तीति धूमो हेतुर्व्याप्यत्वासिद्धः।" इति तर्ककौमुदीकृतः।

तथा च विश्वनाथमते—

"व्यभिचारस्यानुमानमुपाधेस्तु प्रयोजनम्।"

प्रतियोगित्वं साध्यव्यापकत्वम् । साधनवन्निष्ठात्यन्ताभावप्रति-योगित्वं साधनाव्यापकत्वम् । यथा पर्वतो धूमवान्वह्निमत्त्वात्, इत्यत्रार्द्रेन्धनसंयोग उपाधिः । तथा हि यत्र धूमस्तत्रार्द्रेन्धनसंयोग इति साध्यव्यापकत्वम् । यत्र वह्निस्तत्रार्द्रेन्धनसंयोगो नास्ति

ध्यव्यापकः, साधनावच्छिन्नसाध्यव्यापकः, उदासीनधर्मावच्छिन्नसाध्य-व्यापकश्चेति । आद्य आर्द्रेन्धनसंयोगः । द्वितीयो यथा—'वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वात्' इत्यत्र बहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वव्यापकमुद्भूत-रूपवत्त्वम् । तृतीयो यथा—'प्रागभावो विनाशी जन्यत्वात्' इत्यत्र जन्य-

न्यायबोधिनी

चेद्धूमे आर्द्रेन्धनसंयोगव्याप्यत्वं गृहीतम् । एवं वह्नेरव्यापकत्वमार्द्रे-न्धनसंयोगे गृहीतं चेद्वह्नौ तदव्याप्यत्वं गृहीतम् । तदेव व्यभिचरि-तत्वम् । तथा चोपाधिव्यभिचरितत्वं साधने गृहीतं चेदुपाधिभूता-र्द्रेन्धनसंयोगव्याप्यधूमव्यभिचारित्वं गृहीतमेव । अनुमानप्रकारश्च पूर्वानुमानहेतु पक्षीकृत्य वह्निर्धूमव्यभिचारी धूमव्यापकार्द्रेन्धनसंयो-गव्यभिचारित्वात् घटत्वादिवत् । यो यत्साध्यव्यापकव्यभिचारी

---

"उपाधिव्यभिचारेण साध्यव्यभिचारानुमानमुपाधेः प्रयोजनमित्यर्थः ।" अतो न तस्य हेतुदोषत्वम् ।

तदुक्तं तर्ककौमुदीकृद्भिरपि—

"ननूपाधेरपि हेतुदोषत्वात् सोपाधिकोऽपि हेत्वाभासोऽस्तीति कथं पञ्चैव त इति चेन्न, व्यभिचारादिज्ञानस्येवोपाधिज्ञानस्यानुमितितत्करणान्यतरप्रतिबन्धक-ताभावेनोपाधेर्हेतुदोषत्वाभावात् । कथं तर्हि वादेऽनुमाने उपाधिरुपन्यस्यत इति चेत्, व्यभिचारज्ञानप्रयोजकत्वेन तत्र तदुपन्यासः ।" इति ।

उपाध्यभावेन पक्षे साध्याभावसिद्धिरपि द्रष्टव्या ।

तर्कभाषाकृतस्तु "व्याप्यत्वासिद्धस्तु द्विविधः । एको व्याप्तिग्राहकप्रमाणा-भावात् । अपरस्तु उपाधिसद्भावात् । तत्र प्रथमो यथा शब्दः क्षणिकः सत्त्वाद् यत् सत् तत् क्षणिकं यथा जलधरपटलं तथा च शब्दादिरिति । न च सत्त्वक्षणिक-त्वयोर्व्याप्तिग्राहकं प्रमाणमस्ति ।........द्वितीयो यथा क्रत्वन्तरवर्तिनी हिंसा—अधर्मसाधनं हिंसात्वात् क्रतुबाह्यहिंसावत् । अत्र ह्यधर्मसाधनत्वे हिंसात्वं न प्रयोजकं किं तु निषिद्धत्वमेव प्रयोजकमुपाधिरिति यावत् ।" इत्याहुः ।

अयोगोलके आर्द्रेन्धनाभावात् इति साधनाव्यापकत्वम् । एवं साध्यव्यापकत्वे सति साधनाव्यापकत्वादार्द्रेन्धनसंयोग उपाधिः सोपाधिकत्वाद्वह्निमत्त्वं व्याप्यत्वासिद्धम् ।

त्वावच्छिन्नानित्वव्यापकं भावत्वम् । चतुर्थस्तु 'प्रागभावो विनाशी प्रमेयत्वात्' इत्यत्र जन्यत्वावच्छिन्नानित्यत्वव्यापकं भावत्वम् ।

यस्य साध्याभावः प्रमाणान्तरेण निश्चितः स बाधितः । यथा वह्निरनुष्णो द्रव्यत्वादिति । अत्रानुष्णत्व साध्यं, तदभाव उष्णत्वं स्पार्शनप्रत्यक्षेण गृह्यत इति बाधितत्वम् ॥४८॥

व्याख्यातमनुमानम् ।

बाधितस्य लक्षणमाह—यस्येति । अत्र बाधस्य ग्राह्याभावनिश्चयत्वेन, सत्प्रतिपक्षस्य विरोधिज्ञानसामग्रीत्वेन साक्षादनुमितिप्रतिबन्धकत्वम् । इतरेषां परामर्शप्रतिबन्धकत्वम् । तत्रापि साधारणस्याव्यभिचाराभाववत्तया, विरुद्धस्य[1] सामानाधिकरण्याभाववत्तया, व्याप्यत्वासिद्धस्य विशिष्टव्याप्यभाववत्तया, असाधारणानुपसंहारिणोर्व्याप्तिसंशयाधायकत्वेन व्याप्तिज्ञानप्रतिबन्धकत्वम् । आश्रयासिद्धस्वरूपासिद्धयोः पक्षधर्मताज्ञानप्रतिबन्धकत्वम् । उपाधिस्तु व्यभिचारज्ञानद्वारा व्याप्तिज्ञानप्रतिबन्धकः । सिद्धसाधनं तु पक्षताविघटकतया आश्रयासिद्धे अन्तर्भवतीति प्राञ्चः । निग्रहस्थानान्तरमिति नवीनाः ।

इत्यनुमानपरिच्छेदः ।

न्यायबोधिनी

स सर्वोऽपि साध्यव्यभिचारीति बोध्यः । एवम्प्रकारेण प्रकृतानुमानहेतुभूते पक्षे साध्यव्यभिचारोत्थापकतया दूषकत्वमुपाधेः फलम् । तथा च धूमाभाववद्वृत्तित्वरूपधूमव्यभिचारे गृहीते वह्नौ धूमाभाववद्वृत्तित्वरूपव्याप्तिज्ञानप्रतिबन्धः फलम् ।

यस्येति । 'यस्य' हेतोः । 'साध्याभावः' साध्यबाधः । 'प्रमाणान्तरेण' प्रत्यक्षादिप्रमाणेन । पक्षे निश्चितः स बाधित इत्यर्थः । तथा च प्रात्यक्षिकसाध्यबाधनिश्चये जाते साध्यानुमितिप्रतिबन्धः फलम् । बाधितसाध्यकत्वाद्बाधितहेतुरित्युच्यते ॥४२॥

इति न्यायबोधिन्यामनुमानपरिच्छेदः ।

## अथ उपमानम् ।

उपमितिकरणमुपमानम् । संज्ञासंज्ञिसम्बन्धज्ञानमुपमितिः । तत्करणं सादृश्यज्ञानं । तथा हि कश्चिद्गवयशब्दवाच्यमजानन्कुतश्चिदारण्यकपुरुषाद् 'गोसदृशो गवयः' इति श्रुत्वा वनं गतो वाक्यार्थं स्मरन् गोसदृशं पिण्डं पश्यति । तदनन्तरम् 'अयं गवयशब्दवाच्यः' इत्युपमितिरुत्पद्यते । इत्युपमानम् (४१) ॥४९॥

उपमानं लक्षयति । उपमितीति । इत्युपमानपरिच्छेदः ।

### न्यायबोधिनी

उपमानं लक्षयति—उपमितिकरणमिति । उपमितिं लक्षयति—संज्ञासंज्ञीति । संज्ञा नाम पदम् । संज्ञी अर्थः । तयोः सम्बन्धः शक्तिः । तथा च पदपदार्थसम्बन्धज्ञानमुपमितिरित्यर्थः । उपमानं नामातिदेशवाक्यार्थज्ञानम् । अतिदेशवाक्यार्थस्मरणं व्यापारः । उपमितिः फलम् । गोसदृशो गवयपदवाच्य इत्याकारकवाक्याद्गोसादृश्यावच्छिन्नविशेष्यकगवयपदवाच्यत्वप्रकारकं यज्ज्ञानं जायते तदेव करणम् ॥४८॥

इति न्यायबोधिन्यामुपमानपरिच्छेदः ।

---

(४१) इदमत्रावधेयम्,—"प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम् ।"—(१।१।६) इति **गौतमसूत्रस्थं** सादृश्यवाचकसाधर्म्यपदं धर्ममात्रोपलक्षणमिति **तात्पर्यटीकाकृतः** । तथा च तन्मते 'यदोदीच्येन क्रमेलकं निन्दतोक्तं धिक् करभमतिदीर्घवक्रग्रीवं लम्बोष्टं कठोरतीक्ष्णकण्टकाशिनं कुत्सितावयवसन्निवेशमपसदं पशूनामिति, तदुपश्रुत्य दाक्षिणात्य उत्तरापथं गतस्तादृशं वस्तूपलभ्य नूनमसौ करभ इत्यवैति, तदप्युपमानफलम् । तदुक्तं **तात्पर्यटीकायाम्**—"करभसंज्ञाप्रतिपत्तिरप्युपमानफलमिति नाव्याप्तिः ।"... "अत एव बहून्युदाहरणान्युक्त्वाप्याह स्म भगवान् भाष्यकारः "एवमन्योऽप्युपमानस्य लोके विषयो बुभुत्सितव्य इति ।"

वरदराजोऽपि **तार्किकरक्षायां**—

"अत्रातिदेशवाक्यार्थस्त्रिविधः परिगृह्यते ।
साधर्म्यं धर्ममात्रं च वैधर्म्यं चेति भेदतः ॥"

इत्यादिग्रन्थे वाचस्पतिमिश्रमतमनुसृतवान् । परन्तु तेन "वैधर्म्योपमानं तु कीदृगश्व इति प्रश्ने गवादिवद् द्विशफो न भवत्यश्व इत्यतिदेशवाक्याद् गवादि-

## अथ शब्दः

**आप्तवाक्यं शब्दः। आप्तस्तु यथार्थवक्ता। वाक्यं पदसमूहः। यथा गामानय शुक्लां दण्डेनेति।**

शब्दं लक्षयति—आप्तेति। वाक्यं लक्षयति वाक्यमिति।

### न्यायबोधिनी

शब्दं लक्षयति—आप्तेति। आप्तोच्चरितत्वे सति वाक्यत्वं शब्दस्य लक्षणम्। प्रमाणशब्दत्वं लक्ष्यतावच्छेदकम्। वाक्यत्वमात्रोक्तावनाप्तोच्चरितवाक्येऽतिव्याप्तिरत आप्तोच्चरितत्वनिवेशः। तावन्मात्रोक्तौ जबगडदशादावतिव्याप्तिरतो वाक्यत्वम्। आप्तत्वं च प्रयोगहेतुभूतयथार्थज्ञानवत्त्वम् तथा च प्रयोगहेतुभूतयथार्थज्ञानजन्यशब्दत्वमिति पर्यवसन्नोऽर्थः। वस्तुतस्तु पदज्ञानं करणम्। वृत्तिज्ञानसहकृतपदज्ञानजन्यपदार्थोपस्थितिर्व्यापारः। वाक्यार्थज्ञानं शाब्दबोधः फलम्। वृत्तिर्नाम शक्तिलक्षणान्यतररूपा। शक्तिर्नाम घटादिविशेष्यकघटादिपदजन्यबोधविषयत्वप्रकारक ईश्वरसङ्केतः। ईश्वरसङ्केतो नाम ईश्वरेच्छा। सैव शक्तिरित्यर्थः। शक्तिनिरूपकत्वमेव

---

वैसादृश्यमधिगतवतः पश्चादेकशफत्वादिरूपस्य वैसादृश्यस्य तुरङ्गमे प्रत्यभिज्ञान"-मिति तदुदाहरणं प्रदर्शितम्।

वैशेषिकमते तु नातिरिक्तमुपमानमनुमानात्। तदुक्तं प्रशस्तपादभाष्ये "आप्तेनाप्रसिद्धस्य गवयस्य गवा गवयप्रतिपादनादुपमानमाप्तवचनमेव।"

"आप्तवचनञ्चानुमानम्। तस्मादुपमानमप्यनुमानाव्यतिरिक्तमित्यभिप्रायः।" इति कन्दलीकाराः।

तथा च तन्मते तत्र पदवाच्यत्वव्याप्यसादृश्यादिपरामर्शात् अयं गवयशब्दवाच्यो गोसदृशत्वादित्याद्याकारिकाऽनुमितिरेव। तथा व्याप्तिग्रहश्चाप्तवचनात्। उपमिनोमीत्यनुव्यवसायस्यासन्दिग्धत्वेऽनुमितित्वव्याप्यमेवोपमितित्वमिति नोपमानं पृथक् प्रमाणम्।

उपमानचिन्तामणौ च गङ्गेशोपाध्यायैः—

"न च व्याप्तिपरमिदं वाक्यं यो गोसदृशः स गवयपदार्थ इति वाक्यादवगतव्याप्तिरनुमिनुयादयं गवयपदवाच्यो गोसदृशत्वात् अतिदेशकालावगतपिण्डवदिति वाच्यम्, न हि गोसदृशं ज्ञात्वाऽनेन पृष्टः स किंशब्दवाच्य इति, किन्तु सामान्यतो गवयपदार्थमवगम्य स कीदृगिती"त्यादिग्रन्थसन्दर्भेण उपमानस्य प्रमाणान्तरत्वं साधितम्। विचारविस्तरस्तु तत्रैव सुधीभिरनुसन्धेयः।

शक्तं पदम् । अस्मात्पदादयमर्थो बोद्धव्य इतीश्वरसङ्केतः शक्तिः (४२) ॥५०॥

पदलक्षणमाह—शक्तमिति । अर्थस्मृत्यनुकूलपदार्थसम्बन्धः शक्तिः । सा च पदार्थान्तरमिति मीमांसकाः, तन्निरासार्थमाह—अस्मादिति । डित्थादीनामिव घटादीनामपि सङ्केत एव शक्तिः न तु पदार्थान्तरमित्यर्थः ।

गवादिशब्दानां जातावेव शक्तिः । विशेषणतया जातेः प्रथममुपस्थितत्वात् । व्यक्तिलाभस्त्वाक्षेपादिति केचित्, तन्न, गामानयेत्यादौ वृद्धव्यवहारेण सर्वत्रानयनादेर्व्यक्तावेव सम्भवेन जातिविशिष्टव्यक्तावेव शक्तिकल्पनात् ।

### न्यायबोधिनी

पदे शक्तत्वम् । विषयतासम्बन्धेन शक्त्याश्रयत्वं अर्थे शक्यत्वम् । शक्यसम्बन्धो लक्षणा । सा द्विविधा गौणी शुद्धा चेति । गौणी नाम-सादृश्यविशिष्टे लक्षणा । यथा सिंहो माणवक इत्यादौ सिंहपदस्य सिंहसादृश्यविशिष्टे लक्षणा । शुद्धा त्रिविधा—जहल्लक्षणा अजहल्लक्षणा जहदजहल्लक्षणा चेति । लक्ष्यतावच्छेदकरूपेण लक्ष्यमात्रबोधप्रयोजिका जहल्लक्षणा । यथा गङ्गायां घोष इत्यत्र गङ्गापदवाच्यप्रवाहसम्बन्धस्य तीरे सत्त्वात्तादृशशक्यसम्बन्धरूपलक्षणाज्ञानाद्गङ्गापदात्तीरोपस्थितिः । लक्ष्यतावच्छेदकरूपेण लक्ष्यशक्योभयबोधप्रयोजिका अजहल्लक्षणा । यथा काकेभ्यो दधि रक्ष्यतामित्यत्र काकपदस्य दध्युपघातके लक्षणा । लक्ष्यतावच्छेदकं दध्युपघातकत्वम् । तेन रूपेण दध्युपघातकानां सर्वेषां काकबिडालकुक्कुटसारमेयादीनां शक्यलक्ष्याणां बोधात् । जहदजहल्लक्षणा वेदान्तिनां मते । सा च शक्यतावच्छेदकपरित्यागेन व्यक्तिमात्रबोधप्रयोजिका, यथा तत्त्वमसीत्यत्र सर्वज्ञत्वकिञ्चिज्ज्ञत्वपरित्यागेन व्यक्तिमात्रबोधनात् ॥५०॥

(४२) नव्यास्तु तत्तत्पदजन्यबोधविषयत्वप्रकारतानिरूपितेश्वरेच्छाविशेष्यत्वं शक्तिः । तथा चेश्वरेच्छायाः सर्वविषयकत्वेऽपि न पटे घटपदवाच्यत्वम्, न वा पटे घटपदवाच्यत्वं नास्तीत्यादिव्यवहारानुपपत्तिः । अन्यथा वृत्त्यनियामकसम्बन्धावच्छिन्नप्रतियोगित्वानङ्गीकारे तादृशविशेष्यतासम्बन्धेन तत्प्रतीतिर्न स्यादिति प्राहु ।

शक्तिग्रहश्च वृद्धव्यवहारेण । तथा हि—व्युत्पित्सुर्बालो 'गामानय' इत्युत्तमवृद्धवाक्यश्रवणानन्तरं मध्यमवृद्धस्य प्रवृत्तिमुपलभ्य गवानयनं च दृष्ट्वा मध्यमवृद्धप्रवृत्तिजनकज्ञानस्यान्वयव्यतिरेकाभ्यां वाक्यजन्यत्वं निश्चित्य 'अश्वमानय गां बधान' इति वाक्यान्तरे आवापोद्वापाभ्यां गोपदस्य गोत्वविशिष्टे शक्तिः अश्वपदस्य अश्वत्वविशिष्टे शक्तिः, इति व्युत्पद्यते (४३)।

ननु सर्वत्र कार्यपरत्वाद्व्यवहारस्य कार्यवाक्ये एव व्युत्पत्तिः, न सिद्धे इति चेत्, न, 'काञ्च्यां त्रिभुवनतिलको भूपतिः' इत्यादौ सिद्धेऽपि व्यवहारात्। 'विकसितपद्मे मधूनि पिबति मधुकरः' इत्यादौ प्रसिद्धपदसमभिव्याहारात् सिद्धेऽपि मधुकरादिव्युत्पत्तिदर्शनाच्च ।

लक्षणाऽपि शब्दवृत्तिः । शक्यसम्बन्धो लक्षणा । 'गङ्गायां घोषः' इत्यत्र गङ्गापदवाच्यप्रवाहसम्बन्धादेव तीरोपस्थितौ तीरेऽपि शक्तिर्न कल्प्यते(४४) । सैन्धवादौ लक्षणाश्रयोः परस्परसम्बन्धाभावात् नानाशक्तिकल्पनम् । लक्षणा त्रिविधा जहल्लक्षणा, अजहल्लक्षणा, जहदजहल्लक्षणा चेति । यत्र वाच्यार्थस्यान्वयाभावः तत्र जहल्लक्षणा । यथा मञ्चाः क्रोशन्ति । यत्र वाच्यार्थस्याप्यन्वयः तत्र अजहदिति । यथा छत्रिणो गच्छन्ति । यत्र वाच्यैकदेशत्यागेन एकदेशान्वयः तत्र जहदजहदिति । यथा तत्त्वमसीति । गौण्यपि लक्षणैव लक्ष्यमाणगुणसम्बन्धस्वरूपा । यथा अग्निर्माणवक इति ।

व्यञ्जनापि शक्तिलक्षणान्तर्भूता शब्दशक्तिमूला अर्थशक्तिमूला च अनुमानादिना अन्यथासिद्धा । तात्पर्यानुपपत्तिर्लक्षणाबीजम् । तत्प्रता-

---

(४३) ननु वृद्धव्यवहारस्य शक्तिग्राहकत्वे सृष्ट्यादौ कथं शक्तिग्रह इति नाशङ्कनीयम्, तदानीमपीश्वरादेव तद्ग्रहोपपत्तेः ।

(४४) वैयाकरणास्तु गङ्गादिपदानां तीरादौ शक्तिरेव, सर्व्वेषां पदार्थानां प्रायः सर्व्वत्रैव शक्तिरिति लक्षणा स्वतन्त्रवृत्तिर्नाऽभ्युपेयते । तथा च गङ्गायां घोष इत्यादौ शक्यतावच्छेदकप्रवाहत्वस्य तीरे आरोपाद् गङ्गात्वरूपेणैव तीरबोधो न तीरत्वेनेत्याहुः ।

तीच्छया उच्चरितत्वरूपतात्पर्यज्ञानं च वाक्यार्थज्ञाने हेतुः (४५), नानार्थानुरोधात्। प्रकरणादिकं तात्पर्यग्राहकम्। द्वारमित्यादौ पिधेहीति शब्दाध्याहारः। ननु अर्थज्ञानार्थत्वात् शब्दस्यार्थमविज्ञाय शब्दाध्याहारासम्भवादर्थाध्याहार एव युक्त इति चेत्, न, पदविशेषजन्यपदार्थोपस्थितेः शाब्दज्ञाने हेतुत्वात्। अन्यथा 'घटः कर्मत्वमानयनं कृतिः' इत्यत्रापि शाब्दज्ञानप्रसङ्गात्।

पङ्कजादिपदेषु योगरूढिः। अवयवशक्तिर्योगः समुदायशक्ती रूढिः। नियतपद्मत्वज्ञानार्थं समुदायशक्तिः। अन्यथा कुमुदेऽपि प्रयोगप्रसङ्गः। 'इतरान्विते शक्तिः' इति प्राभाकराः।

'अन्वयस्य वाक्यार्थतया भानसम्भवादन्वयांशेऽपि शक्तिर्न कल्पनीया' इति गौतमीयाः (४६)।

---

(४५) ननु शुकबालादीनां तात्पर्य्याभावेन तत्तदुच्चरितशब्दाद् बोधो न स्यादिति चेन्न, तत्रापि ईश्वरतात्पर्य्यस्य जागरूकत्वात्। केचित्तु तत्प्रतीतिजननस्वरूपयोग्यत्वे सति तदन्यमात्रप्रतीतीच्छयाऽनुच्चरितत्वमेव तात्पर्य्यलक्षणम्। तथा च शुकाद्युच्चारितशब्देऽपि तात्पर्य्यसत्त्वादन्वयबोध इत्याहुः। अन्ये तु तात्पर्य्यज्ञानं नानार्थादौ क्वचित् कारणं शाब्दमात्रे तत्कारणत्वानावश्यकत्वादिति वदन्ति। नव्यास्तु सैन्धवमानयेत्यादावपि तात्पर्य्यज्ञानं लवणान्वयबुद्धौ न कारणम्, किन्तु तात्पर्य्यानुमापकत्वेनाभिमतं भोजनादिप्रकरणस्य प्रतिसन्धानमिति प्राहुः।

(४६) नन्वेवमपि वङ्गीयादिभाषाशब्देभ्यः कथमन्वयबोधः, तत्र तत्र शक्तिलक्षणयोरभावादिति चेत्, भाषाशब्दैः संस्कृतस्मरणं ततो बोध इति प्राञ्चः। तदुक्तं न्यायमञ्जरीकारैः,—"ते तु (भाषाशब्दाः) वर्णसारूप्यच्छायया गवादिशब्दस्मृतिमादधानास्तदर्थप्रतिपत्तिहेतुतामुपगच्छन्तीति।"

नव्यास्तु संस्कृतभाषामविदुषां कृषीवलादीनां तत्तद्भाषाशब्देभ्यो झटिति बोधान्नैवम्, किन्तु तेष्वेव शक्तिभ्रमाद् बोध इत्याहुः। तथा चार्थविशेषे व्याकरणव्युत्पाद्यत्वमेव साधुत्वमिति नैयायिकमतम्।

वैयाकरणमते च संस्कृतवद्भाषाशब्दा अपि वाचका एव। एवञ्च 'साधुभिर्भाषितव्यम्' 'साधूनेव प्रयुञ्जीते'त्यादिवचनसिद्धं पुण्यजनकत्वं साधुत्वमिति। तदुक्तं—

"वाचकत्वाविशेषेऽपि नियमः पुण्यपापयोः।" इति।

आकाङ्क्षा योग्यता सन्निधिश्च वाक्यार्थज्ञाने हेतुः। पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वमाकाङ्क्षा। अर्थाबाधो योग्यता। पदानामविलम्बेनोच्चारणं सन्निधिः। तथा च आकाङ्क्षादिरहितं वाक्यमप्रमाणम्। यथा 'गौरश्वः पुरुषो हस्ती' इति न प्रमाणम्, आकाङ्क्षाविरहात्। 'अग्निना सिञ्चेत्' इति न प्रमाणम्, योग्यताविरहात्। प्रहरे प्रहरे असहोच्चारितानि 'गाम् आनय' इत्यादिपदानि न प्रमाणम्, सान्निध्याभावात् ॥५१॥

आकाङ्क्षेति। आकाङ्क्षादिज्ञानमित्यर्थः। अन्यथा आकाङ्क्षादिभ्रमाच्छाब्दभ्रमो न स्यात्। आकाङ्क्षां लक्षयति—पदस्येति। योग्यतालक्षणमाह—अर्थेति। सन्निधिलक्षणमाह—पदानामिति। अविलम्बेन पदार्थोपस्थितिः सन्निधिः। उच्चारणं तु तदुपयोगितया उक्तम्। गौः अश्व इति। घटः कर्मत्वमित्यप्यनाकाङ्क्षोदाहरणं द्रष्टव्यम्।

वाक्यं द्विविधम्—वैदिकं, लौकिकं च। वैदिकमीश्वरोक्तत्वात् सर्वमेव प्रमाणम्। लौकिकं त्वाप्तोक्तं प्रमाणम्। अन्य-

वाक्यं विभजते—वाक्यमिति। वैदिके विशेषमाह—वैदिकमीश्वरोक्तत्वादिति। ननु वेदस्यानादित्वात् कथमीश्वरोक्तत्वमिति चेत्, न, 'वेदः पौरुषेयः वाक्यसमूहत्वात् भारतादिवत्' इत्यनुमानेन पौरुषेयत्व-

## न्यायबोधिनी

आकाङ्क्षां लक्षयति—पदस्येति। अव्यवहितोत्तरत्वादिसम्बन्धेन यत्पदे यत्पदप्रकारकज्ञानव्यतिरेकप्रयुक्तो यादृशशाब्दबोधाभावस्तादृशशाब्दबोधे तत्पदे तत्पदवत्त्वमाकाङ्क्षा। यथा घटमित्यादिस्थलेऽव्यवहितोत्तरत्वादिसम्बन्धेनाम्पदं घटपदवदित्याकारकाम्पदविशेष्यकघटपदप्रकारकज्ञानसत्त्वे घटीयं कर्मत्वमिति बोधो जायते। अम् घट इति विपरीतोच्चारणे तु तादृशज्ञानाभावात्तादृशशाब्दबोधो न जायते अतस्तादृशाकाङ्क्षाज्ञानं शाब्दबोधे कारणम्। अर्थाबाध इति। बाधाभावो योग्यतेत्यर्थः। अग्निना सिञ्चतीत्यत्र सेककरणत्वस्य जलादिधर्मस्य वह्नौ बाधनिश्चयसत्त्वान्न तादृशवाक्याच्छाब्दबोधः। सन्निधिं निरूपयति—पदानामिति। 'असहोच्चारितानि' विलम्बोच्चारितानि॥५१॥

दप्रमाणम् । वाक्यार्थज्ञानं शाब्दज्ञानम् । तत्करणम् शब्दः । इति शब्दप्रमाणम् ॥५२॥

सिद्धेः । न च स्मर्यमाणकर्तृत्वमुपाधिः । गौतमादिभिः शिष्यपरम्परया वेदेऽपि सकर्तृत्वस्मरणेन साधनव्यापकत्वात् । 'तस्मात् तपस्तेपानात् त्रयो वेदा अजायन्त' इति श्रुते' ।

ननु वर्णा नित्याः 'स एवायं गकारः' इति प्रत्यभिज्ञाबलात् । तथा च कथं वेदस्यानित्यत्वमिति चेत्, न, 'उत्पन्नो गकारो नष्टो गकारः' इत्यादिप्रतीत्या वर्णानामनित्यत्वात् 'सोऽयं गकार' इति प्रत्यभिज्ञायाः 'सेयं दीपज्वाला' इतिवत् जात्यालम्बनत्वात् । वर्णानां नित्यत्वेऽप्यानुपूर्वीविशिष्टवाक्यस्यानित्यत्वात् । तस्मादीश्वरोक्तो वेदः । मन्वादिस्मृतीनामाचाराणां च वेदमूलकतया प्रामाण्यम् । स्मृतिमूलवाक्यानामिदानीमनध्ययनात् तन्मूलभूता काचित् शाखोच्छिन्नेति कल्प्यते ।

ननु पाठ्यमानवेदवाक्योत्सादस्य कल्पयितुमशक्यतया विप्रकीर्णवादस्यायुक्तत्वादिति नित्यानुमेयो वेदो मूलमिति चेत्, न, तथापि वर्णानुपूर्वीज्ञानाभावेन बोधकत्वासम्भवात् ।

ननु 'एतानि पदानि स्मारितार्थसंसर्गवन्ति आकाङ्क्षादिमत्पदकदम्बकत्वात् 'गामानय दण्डेनेति' मद्वाक्यवत् इत्यनुमानादेव संसर्गज्ञानसम्भवात् शब्दो न प्रमाणान्तरमिति चेत्, न, अनुमित्यपेक्षया शाब्दज्ञानस्य विलक्षणस्य 'शब्दात्प्रत्येमि' इत्यनुव्यवसायसाक्षिकस्य सर्वसम्मतत्वात् (४७) ।

## न्यायबोधिनी

वैदिकमिति । वेदवाक्यमित्यर्थः । इदमुपलक्षणम् । वेदमूलकस्मृत्यादीन्यपि ग्राह्याणि । लौकिकं त्विति । वेदवाक्यभिन्नमित्यर्थः । आप्तत्वं च प्रयोगहेतुभूतयथार्थज्ञानवत्त्वम् ॥५२॥

इति न्यायबोधिन्यां शब्दपरिच्छेदः ।

(४७) किञ्च न निर्वाहोऽपि सर्वत्रानुमानेन शाब्दबोधस्य । तथा च शब्दशक्तिप्रकाशिकाकारप्रदर्शितनवीनतरसरणिमनुसरद्भिर्दिनकरभट्टैरुक्तं मुक्तावलीप्रकाशे—

नन्वर्थापत्तिरपि प्रमाणान्तरमस्ति 'पीनो देवदत्तो दिवा न भुङ्क्ते' इति दृष्टे श्रुते वा पीनत्वान्यथानुपपत्त्या रात्रिभोजनमर्थापत्त्या कल्प्यत इति चेत्, न, देवदत्तो रात्रौ भुङ्क्ते दिवाऽभुञ्जानत्वे सति पीनत्वात् इत्यनुमानेनैव रात्रिभोजनस्य सिद्धत्वात्।

शते पञ्चाशदिति सम्भवोऽप्यनुमानमेव। 'इह वटे यक्षस्तिष्ठति इत्यैतिह्यमपि अज्ञातमूलवक्तृकः शब्द एव। चेष्टापि शब्दानुमानद्वारा व्यवहारहेतुरिति न मानान्तरम् (४८) तस्मात् प्रत्यक्षानुमानोपमानशब्दाश्चत्वार्येव प्रमाणानि।

---

"घटात् पृथगित्यादौ घटावधिकपृथक्त्वप्रकारेण निरवच्छिन्नविशेष्यताकः पृथक्त्वाश्रयस्य शाब्दबोधः सर्व्वानुभवसिद्धः। स चास्माकं तादृशानुपूर्व्वीकपदज्ञानत्वेन तादृशशाब्दबोधं प्रति हेतुत्वादुपपद्यते। वैशेषिकाणान्तु पृथक्त्वं घटावधिकं घटपदसाकाङ्क्षपृथक्पदस्मारितत्वादित्यनुमानेन न तन्निर्वाहः, पक्षविधया पृथक्त्वस्य भानेऽपि तदाश्रयस्याभानात्। न च पटं पक्षीकृत्य पक्षे घटावधिकपृथक्त्ववानित्यनुमित्या तन्निर्वाह इति वाच्यम्, पटादिनिष्ठविशेष्यतायास्तत्र पक्षतावच्छेदकीभूतपटत्वावच्छिन्नतया निरवच्छिन्नविशेष्यताकतादृशशाब्दबोधसमानाकारकत्वस्य तथाप्यनिर्वाहादिति"।

(४८) अयं पञ्चाशद्वान् शतवत्त्वात् इत्यनुमानेनैव शतवान् इत्युक्ते पञ्चाशद्वान् इति ज्ञानं सम्भवति शतस्य पञ्चाशद्व्याप्यत्वादिति भावः। एतादृशचेष्टया इत्थमर्थो बोद्धव्य इति सङ्केतितचेष्टया विलक्षणप्रमाजननात् चेष्टापि प्रमाणान्तरम् इति मतं निरस्यति—**चेष्टापीति**। 'शब्दानुमानद्वारा' शब्दद्वारा अनुमानद्वारा वा न तु स्वातन्त्र्येणेत्यर्थः। चेष्टया कल्पितस्य शब्दस्य प्रमाजनकत्वेऽपि गौरवादनुमानानुसरणम्। अनुमानाकारश्च—अयमिममर्थं ब्रूते एतदर्थकचेष्टावत्त्वादिति।

अधिकरणग्रहणप्रतियोगिस्मरणसहकृतयाऽनुपलब्ध्या षष्ठप्रमाणभूतयाऽभावो गृह्यते, न त्विन्द्रियादिनेति मीमांसकमतम्। तदुक्तं—

"गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम्।
मानसं नास्तिताज्ञानं जायतेऽक्षानपेक्षया॥" इति॥

[ श्लोकवार्त्तिके अभावग्रन्थे २६ श्लो० ]

तन्न सहन्ते न्यायवैशेषिकाचार्य्याः। तथा च अभावप्रतिपत्तिरिन्द्रियजन्या जन्यत्वे सति ज्ञानकरणकान्यत्वात्, रूपादिप्रतिपत्तिवदित्यनुपलब्धेः प्रत्यक्षाव-

अथ ज्ञानानां तद्वति तत्प्रकारकत्वं स्वतोग्राह्यं परतो वेति विचार्यते। तत्र विप्रतिपत्तिः। ज्ञानप्रामाण्यं तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्रीग्राह्यं न वा। अत्र विधिकोटिः स्वतस्त्वम्, निषेधकोटिः परतस्त्वम्।

अनुमानग्राह्यत्वेन सिद्धसाधनवारणाय—यावदिति। 'इदं ज्ञानमप्रमा' इति ज्ञानेन प्रामाण्याग्रहाद्बाधवारणाय—अप्रामाण्याग्राहकेति। 'इदं ज्ञानमप्रमा' इति अनुव्यवसायनिष्ठप्रामाण्यग्राहकस्य अप्रामाण्याग्राहकत्वाभावात् स्वतस्त्वं न स्यादतः तदिति। तस्मिन् ग्राह्यप्रामाण्याश्रये अप्रामाण्याग्राहकेत्यर्थः। उदाहृतस्थले व्यवसाये अप्रामाण्यग्राहकस्याप्यनुव्यवसाये तदग्राहकत्वात्स्वतस्त्वसिद्धिः।

ननु स्वत एव प्रामाण्यं गृह्यते, 'घटमहं जानामि' इत्यनुव्यवसायेन घटघटत्वयोरिव तत्सम्बन्धस्यापि विषयीकरणात् व्यवसायरूपप्रत्यासत्तेस्तुल्यत्वात्। पुरोवर्तिनि प्रकारसम्बन्धस्यैव प्रमात्वपदार्थत्वादिति चेत्,

---

सीयमानत्वेन न प्रमाणान्तरत्वम्। तत्र असम्बद्धोऽप्यभावश्चक्षुषा गृह्यत इति केचित्। तदाहुर्न्यायमञ्जरीकाराः—

"भावे खल्वयं नियमः यदसम्बद्धस्य चक्षुषाऽग्रहणम्, अभावस्त्वसम्बद्धोऽपि चक्षुषा ग्रहीष्यते। षट्प्रकारसन्निकर्षवर्णनमपि भावाभिप्रायमेव...... प्राप्यकारित्वमपि इन्द्रियाणां वस्त्वभिप्रायमेवोच्यते। तस्मादवस्तुत्वादभावस्य तेन सन्निकर्षमलभमानमपि नयनमुपजनयति तद्विषयमवगममिति न दोषः।"

वस्तुतः संयुक्तविशेषणताख्यसन्निकर्षेणैव अभावस्य प्रत्यक्षं सूपपन्नम्, यथा समवायप्रत्यक्षवादिनां पक्षे समवायस्य। तदुक्तमुद्द्योतकरैः—"समवाये चाभावे च विशेषणविशेष्यभावादिति।" (१।१।४)

प्रशस्तपादास्तु "अभावोऽप्यनुमानमेव यथोत्पन्नं कार्यं कारणसद्भावे लिङ्गम्। एवमनुत्पन्नं कार्यं कारणासद्भावे लिङ्गम्।" इत्याहुः।

एवञ्च तद्भूतलं तदा चैत्राभाववत् एकज्ञानग्रहणयोग्यस्य ज्ञायमानत्वेऽपि चैत्रवत्तया अज्ञायमानत्वादित्यनुमानाकारः।

प्राप्यकारमते क्वचिदभावज्ञानं चक्षुरादिनापि। तदाहुः किरणावलीकाराः,—"अपिशब्दात् क्वचित् प्रत्यक्षमेवेत्यर्थः।"

'काशीयं' 'गङ्गेयं' 'वेदोऽयं' मित्यादिज्ञानमैतिह्याख्यात् प्रमाणान्तरादिति पौराणिकाः। वितथमैतिह्यं प्रमाणमेव न, अवितथमाप्तोपदेश एव इति तार्किकादयः।

न, स्वतः प्रामाण्यग्रहे 'जलज्ञानं प्रमा न वा' इत्यनभ्यासदशायां प्रमात्वसंशयो न स्यात्। अनुव्यवसायेन प्रामाण्यस्य निश्चितत्वात्। तस्मात् स्वतोग्राह्यत्वाभावात् परतोग्राह्यत्वम्। तथा हि—प्रथमं जलज्ञानानन्तरं प्रवृत्तौ सत्यां जललाभे सति 'पूर्वोत्पन्नं ज्ञानं प्रमा' समर्थप्रवृत्तिजनकत्वात् 'यन्नैवं तन्नैवम् यथा अप्रमा' इति व्यतिरेकिणा प्रमात्वं निश्चीयते। द्वितीयादिज्ञानेषु पूर्वज्ञानदृष्टान्तेन तत्सजातीयत्वलिङ्गेनान्वयव्यतिरेकिणापि गृह्यते।

प्रमाया गुणजन्यत्वमुत्पत्तौ परतस्त्वं। प्रमासाधारणकारणं गुणः अप्रमासाधारणकारणं दोषः। तत्र प्रत्यक्षे विशेषणवद्विशेष्यसन्निकर्षो गुणः। अनुमितौ व्यापकवति व्याप्यज्ञानम्। उपमितौ यथार्थसादृश्यज्ञानम्। शाब्दज्ञाने यथार्थयोग्यताज्ञानम्। इत्याद्यूहनीयम्। पुरोवर्तिनि प्रकाराभावस्यानुव्यवसायेनानुपस्थितत्वात् अप्रमात्वं परत एव गृह्यते। पित्तादिदोषजन्यत्वं उत्पत्तौ परतस्त्वम्।

ननु सर्वेषां ज्ञानानां यथार्थत्वात् अयथार्थज्ञानमेव नास्तीति। न च 'शुक्ताविदं रजतम्' इति ज्ञानात् प्रवृत्तिदर्शनादन्यथाख्यातिसिद्धिरिति वाच्यम्, रजतस्मृतिपुरोवर्तिज्ञानाभ्यामेव प्रवृत्तिसम्भवात्। उपस्थितेष्टभेदाग्रहस्यैव सर्वत्र प्रवर्तकत्वेन 'नेदं रजतम्' इत्यादौ अतिप्रसङ्गाभावादिति चेत्, सत्यरजतस्थले पुरोवर्तिविशेष्यकरजतत्वप्रकारकज्ञानस्य लाघवेन प्रवृत्तिजनकतया शुक्तावपि रजतार्थिप्रवृत्तिजनकत्वेन विशिष्टज्ञानस्यैव कल्पनात्।

अयथार्थस्त्रिविधः—संशयविपर्ययतर्कभेदात्। एकस्मिन् धर्मिणि विरुद्धनानाधर्मवैशिष्ट्यज्ञानं संशयः। यथा स्थाणुर्वा

अयथार्थानुभवं विभजते—अयथार्थ इति। स्वप्नस्य मानसविपर्यय-

न्यायबोधिनी

यथार्थानुभवं निरूप्यायथार्थानुभवं विभजते—एकेति। एकधर्मावच्छिन्नविशेष्यतानिरूपितभावाभावप्रकारकज्ञानं संशय इत्यर्थः। भावद्वयकोटिकसंशयाप्रसिद्धेः स्थाणुर्वेत्यत्र स्थाणुत्वस्थाणुत्वाभावपुरुषत्वपुरुषत्वाभावकोटिक एव संशय इत्यर्थः॥५३॥

पुरुषो वेति । मिथ्याज्ञानं विपर्ययः । यथा शुक्तौ इदं रजतमिति । व्याप्यारोपेण व्यापकारोपस्तर्कः । यथा यदि वह्निर्न स्यात् तर्हि धूमोपि न स्यादिति ॥५३॥

रूपत्वात् न त्रैविध्यविरोधः (४९) । संशयलक्षणमाह–एकेति । 'घटपटौ' इति समूहालम्बनेऽतिव्याप्तिवारणाय—एकेति । 'घटो द्रव्यम्' इत्यादौ अतिव्याप्तिवारणाय–विरुद्धेति । 'पटत्वविरुद्धघटत्वान्' इत्यत्र अतिव्याप्तिवारणाय—नानेति । विपर्ययलक्षणमाह—मिथ्येति । तदभाववति तत्प्रकारकनिश्चय इत्यर्थः । तर्कलक्षणमाह—व्याप्येति । यद्यपि तर्को विपर्ययेऽन्तर्भवति, तथापि प्रमाणानुग्राहकत्वाद् भेदेन कीर्तनम् ।

**न्यायबोधिनी**

**मिथ्याज्ञानमिति । अयथार्थज्ञानमित्यर्थः। विपर्ययो नाम भ्रमः। व्याप्यारोपेणेति । तर्के व्याप्यस्य व्यापकस्य च बाधनिश्चयः कारणम् । अन्यथा बाधनिश्चयाभावे इष्टापत्तिदोषेण तर्कानुत्पत्तेः ।**

---

( ४९ ) वैशेषिकमते अनध्यवसायोऽपि तृतीया विधा अयथार्थस्य । तथा च **प्रशस्तपादभाष्यम्**—

"तत्राविद्या चतुर्विधा संशयविपर्य्ययानध्यवसायस्वप्नलक्षणा ।"

"गते प्रसिद्धे राजनि कोऽप्ययनेन पथा गत इतिज्ञानमात्रमनवधारितविशेषमनध्यवसायः ।" इति **कन्दलीकाराः** ।

"अनुपलब्धसपक्षविपक्षसहचारस्यासाधारणधर्म्मस्य दर्शनात् पनसादौ किञ्चिदयमिति ज्ञानमनेककोटिकमनध्यवसायः संशयभिन्नो विषयभेदात् ।" इति **न्यायलीलावतीप्रकाशे** वर्द्धमानोपाध्यायाः ।

"पनसादौ किंस्विदिदमिति ज्ञानमसाधारणधर्म्मजन्यमनध्यवसायः । स च वैशेषिकमते संशयाद् भिन्नः ।" इति **कण्ठाभरणे** शङ्करमिश्राः ।

संशय एवायमिति **भूषणः** । मैवम्, "विरुद्धनानाप्रकारकमेकधर्म्मिकं ज्ञानं संशयः, विशेषतो विरुद्धकोट्यनुल्लेखात् नाऽनध्यवसायः, अनुल्लिखितनानाविरुद्धकोट्युल्लेखे हि सः, अत्र पनसस्य किञ्चित्त्वेन विरोधिनानाकोटेरुल्लेखात् ।" इति **लीलावतीप्रकाशकृतः** ।

ननु कथमस्याऽयथार्थत्वम् ? विशेषव्यवहारपरिपन्थित्वात्, किञ्चित्त्वेनाऽसत्कोटेरुल्लेखाच्चेति भ्रमः ।

स्मृतिरपि द्विधा—यथार्थाऽयथार्था चेति। प्रमाजन्या यथार्था। अप्रमाजन्या अयथार्था (५०) ॥५४॥

स्मृतिं विभजते—स्मृतिरिति।

(५०) आर्हतमते स्मृतिरपि प्रमाणान्तरम्। तदुक्तम्, **अष्टसहस्र्याम्**,—
"स्मृतेरप्रामाण्यकल्पनायामनुमानोत्थानायोगः, सम्बन्धस्मृतेरप्रमाणत्वात्, तस्या अपि लैङ्गिकत्वेन प्रामाण्ये परापरसम्बन्धस्मृतीनामनुमानत्वकल्पनादनवस्थानात् सम्बन्धस्मृतिमन्तरेणानुमानानुदयात्।......" इति। (२७९ पृ०)

**रत्नाकरावतारिकायाञ्च**—"इति सिद्धमनुमानस्येव स्मरणस्यापि प्रामाण्यम्। न च तस्याप्रामाण्येऽनुमानस्यापि प्रामाण्यमुपपादि। सम्बन्धस्याप्रमाणस्मरणसन्दर्शितस्यानुमानानङ्गत्वात्, संशयितलिङ्गवत्।....(तृतीय परिच्छेदे) इति सिद्धान्तितम्।

**न्यायकन्दलीकृतस्तु**—"तत्र चार्थस्यातीतत्वं पूर्वानुभूतत्वं प्रतीयते इत्यतीतविषया स्मृतिः। अत एव न प्रमाणं तस्याः पूर्वानुभवविषयत्वोपदर्शनेनार्थे निश्चिन्वत्या अर्थपरिच्छेदे पूर्वानुभवपारतन्त्र्यात्। अनुमानज्ञानं तूत्पत्तौ परापेक्षं स्वविषये स्वतन्त्रमेव। स्मृति (ते ?) रिव तस्मात् पूर्वानुभवानुसन्धानेनार्थप्रतीत्यभावात्।" इत्याहुः।

यथाहुः **तन्त्रटीकायां** गुरवः—

"पूर्वविज्ञानविषयं विज्ञानं स्मृतिरिष्यते।
पूर्वज्ञानाद् विना तस्याः प्रामाण्यं नावगम्यते॥ इति।

यथा चेदमाहुः कारिकायाम्,—

"तत्र यत् पूर्वविज्ञानं तस्य प्रामाण्यमिष्यते।
तदुपस्थानमात्रेण स्मृतेः स्याच्चरितार्थता॥" इति।

अनर्थजत्वात् स्मृतेरप्रामाण्यमिति केचित्। तन्न, तथा सति अतीतानागतविषयस्याप्रामाण्यं स्यात्। विचारविस्तरस्तु **रत्नाकरावतारिकायां** तृतीयपरिच्छेदे द्रष्टव्यः शास्त्ररसिकैः।

**न्यायलीलावतीकृतस्तु**—"स्मृतिरपि मानान्तरमेव स्वार्थनिश्चयहेतुत्वा" दित्युपक्रम्य मुनीनामव्यवहारादिति चेन्न, वादिनं प्रति मुनित्वस्यैवासिद्धेरिति तत् कथं द्वे एव प्रमाणे।" इत्यन्तग्रन्थेन स्मृतिकरणीभूतस्य तृतीयप्रमाणत्वमाशङ्कितवन्तः। 'मानान्तर'मित्यत्र 'मान'पदं प्रमितिपरम्। तथा च **लीलावतीप्रकाशे** 'मानान्तरमिति प्रमित्यन्तरमित्यर्थः। एवञ्च स्वार्थनिश्चयहेतुत्वादित्यस्य स्वार्थनिश्चयात्मकत्वादित्येवार्थः। अन्यथा स्मृतिजन्यप्रमाविरहेण तस्या मानान्तरत्वमसम्भवीति ध्येयम्।

सर्वेषामनुकूल( तया ) वेदनीयं सुखम् (५१) ॥५५॥

प्रतिकूल (तया) वेदनीयं दुःखम् ॥५६॥

इच्छा कामः ॥५७॥

क्रोधो द्वेषः ॥५८॥

सुखं लक्षयति—सर्वेषामिति । 'सुख्यहम्' इत्याद्यनुव्यवसायगम्यं सुखत्वादिकमेव लक्षणम्। यथाश्रुतं तु स्वरूपकथनमिति द्रष्टव्यम् ।

न्यायबोधिनी

सुखं निरूपयति—सर्वेषामिति । इतरेच्छाऽनधीनेच्छाविषयत्वमिति निष्कर्षः। यथाश्रुते घटोऽनुकूल इत्याकारकज्ञानदशायामनुकूलत्वप्रकारकज्ञानविशेष्यत्वस्य घटादावपि सत्त्वाद् घटादावतिव्याप्तिरिति । सुखेच्छाधीने भोजनादावतिव्याप्तिवारणाय इतरेच्छानधीनेतीच्छाविशेषणम् । सुखेच्छायाः सुखत्वप्रकारकज्ञानमात्रजन्यत्वात् ॥५५॥

दुःखं निरूपयति—प्रतिकूलेति। अत्रापीतरद्वेषानधीनद्वेषविषयत्वमिति निष्कृष्टलक्षणम्। द्वेषविषयत्वमात्रोक्तौ सर्पादावतिव्याप्तिस्तत्रापि द्वेषविषयत्वसत्त्वादतस्तत्रातिव्याप्तिवारणायेतरद्वेषानधीनेति द्वेषविशेषणम् । सर्पजन्यदुःखादौ द्वेषात्सर्पेऽपि द्वेष इति सर्पद्वेषस्य सर्पजन्यदुःखद्वेषजन्यत्वादन्यद्वेषाजन्यद्वेषविषयत्वरूपदुःखलक्षणस्य सर्पादौ

अत्र तेषामयं समाधानसमासः—"पूर्वानुभवविषयतयैव वा विषयनियमादिच्छादिवदिति ।" पूर्वानुभवेन सहैकविषयत्वनियमादित्यर्थः । तथा च स्मृतित्वं न प्रमावृत्ति कारणीभूतज्ञानविषयविषयकमात्रवृत्तिजातित्वात् इच्छात्ववदिति भावः। केचित्तु स्मृतिर्न प्रमितिर्विषयसम्बन्धे परतन्त्रत्वादित्याहुः ।

प्रभाकरविजयकृतस्तु—"स्मृतिस्तु परिच्छेदे पूर्वबुद्ध्यपेक्षैवेति न प्रमाणम् । अनुमानं तर्हि न प्रमाणम्, तस्य पूर्वबुद्ध्यपेक्षत्वात् इति चेन्न, तस्य न परिच्छेदे पूर्वबुद्ध्यपेक्षत्वम्, किन्तूत्पत्तावेव । कथमिदमवगम्यते स्मृतेः परिच्छेदे पूर्वबुद्ध्यपेक्षत्वम्, अनुमानस्य तूत्पत्ताविति ? ज्ञातस्वभावादेव सुखमवगन्तुं शक्यते । तदाह—स्मृतिर्हि 'तत्' इत्युपजायमाना प्राचीं प्रतीतिमनुरुध्यमाना न स्वातन्त्र्येणार्थं परिच्छिनत्तीति न प्रमाणं स्मृतिरिति । अनुमाने तु 'तत्' इति वेपाभावादुत्पत्तौ पूर्वबुद्ध्यपेक्षेति निश्चीयते ।" इत्याहुः ।

( ५१ ) सुखं चतुर्विधं वैषयिकं मानोरथिकमाभ्यासिकमाभिमानिकं चेति । तत्र विषयसाक्षात्कारजमाद्यम् । विषयध्यानजं द्वितीयम् । सूर्यनमस्काराद्यभ्यासाज्जायमानं तृतीयम् । धनपाण्डित्याद्यभिमानजन्यं तुरीयम् । एवं दुःखेऽपि बोध्यम्।

कृतिः प्रयत्नः ( ५२ ) ॥५९॥

विहितकर्मजन्यो धर्मः ॥६०॥

निषिद्धकर्मजन्योऽधर्मः ( ५३ ) ॥६१॥

बुद्ध्यादयोऽष्टावात्ममात्रविशेषगुणाः । बुद्धीच्छाप्रयत्ना नित्या अनित्याश्च । नित्या ईश्वरस्य अनित्या जीवस्य ॥६२॥

न्यायबोधिनी

नातिव्याप्तिः । फलेच्छा उपायेच्छा प्रति कारणम् । अतः फलेच्छावशादुपायेच्छा भवति । एवं फले द्वेषादुपाये द्वेषः ।

धर्माधर्मौ निरूपयति–विहितेति । वेदविहितेत्यर्थः । निषिद्धेति । वेदनिषिद्धेत्यर्थः ।

बुद्ध्यादयोऽष्टाविति । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मा इत्यर्थः ।

---

( ५२ ) प्रयत्नो द्विविधो जीवनयोनिरन्यश्च । जीवनादृष्टं योनिः कारणं यस्य स आद्यः शरीरे श्वासप्रश्वासहेतुः । गुरुभारोत्तोलने धावनादौ प्रयत्नविशेषात् श्वासक्रियाविशेषदर्शनाद् 'यद्विशेषयोः कार्य्यकारणभावो बाधकं विना तत्सामान्ययोरपी'ति न्यायेन प्राणक्रियासामान्ये यत्नसामान्यजन्यत्वानुभवात् निद्रादिसकलकालिकस्य तस्यावश्यकत्वात् । स चातीन्द्रियः । द्वितीयो द्विधा—एको द्वेषजो भुजगादिभ्यो निवृत्तिलक्षणः, द्वितीयश्चिकीर्षादिजन्यः प्रवृत्तिरूपः । एतौ प्रत्यक्षौ ।

( ५३ ) धर्म्माधर्म्मौ त्रिविधौ, सञ्चितौ क्रियमाणौ प्रारब्धौ च ।

**कापिलास्तु**—अन्तःकरणस्य बुद्धेर्वृत्तिविशेषं धर्म्ममाहुः । वृद्धमीमांसका यागादिकर्म्मनिर्व्वर्त्त्यमपूर्व्वं नाम धर्म्ममभिवदन्ति । **भट्टपादास्तु**—

"श्रेयो हि पुरुषप्रीतिः सा द्रव्यगुणकर्म्मभिः ।
चोदनालक्षणैः साध्या तस्मात् तेष्वेव धर्म्मता ॥"

इत्यादिश्लोकैः श्रेयःसाधनतया यागादिकर्म्मणो धर्म्मत्वं नरकपातादिसाधनत्वाच्च हिंसादिकर्म्मणोऽधर्म्मत्वं प्रतिपादयन्ति । तानि च द्रव्यगुणकर्मात्मकानीति तेष्वेव धर्म्माधर्म्मयोरन्तर्भाव इति **कौमारिलमतम्** । कार्य्याद्यपरनामधेयमपूर्वमेव धर्म्मशब्दवाच्यमिति **प्राभाकराः** । **शाक्यभिक्षवश्च** चित्तवासनां धर्म्ममाचक्षते । **आर्हतास्तु** पुण्यपुद्गलान् धर्म्मत्वेन व्यपदिशन्ति ।

संस्कारस्त्रिविधः—वेगो भावना स्थितिस्थापकश्चेति ।

वेगः पृथिव्यादिचतुष्टयमनोमात्रवृत्तिः ।

संस्कारं विभजते—संस्कार इति । संस्कारत्वजातिमान् संस्कारः । वेगस्याश्रयमाह—वेग इति । वेगत्वजातिमान् वेगः ।

अनुभवजन्या स्मृतिहेतुर्भावना । आत्ममात्रवृत्तिः ।

भावनां लक्षयति—अनुभवेति । अनुभवध्वंसेऽतिव्याप्तिवारणाय स्मृतीति । आत्मादौ अतिव्याप्तिवारणाय अनुभवेति । स्मृतेरपि संस्कारजनकत्वं नवीनैरुक्तम् ।

न्यायबोधिनी

संस्कारं विभजते—संस्कार इति। भावनां लक्षयति—अनुभवेति। अनुभवजन्यत्वे सति स्मृतिहेतुत्वं भावनाया लक्षणम्। अत्रानुभवजन्यत्वे सतीति विशेषणानुपादाने आत्ममनःसंयोगेऽतिव्याप्तिरात्ममनःसंयोगस्य ज्ञानमात्रं प्रत्यसमवायिकारणत्वेन स्मृतिं प्रत्यपि कारणत्वादतस्तदुपादानम् । आत्ममनःसंयोगस्यानुभवजन्यत्वाभावान्नातिव्याप्तिः । तावन्मात्रे कृतेऽनुभवध्वंसेऽतिव्याप्तिः, ध्वंसं प्रति प्रतियोगिनः कारणत्वेनानुभवध्वंसस्याप्यनुभवजन्यत्वात् । अतः स्मृतिहेतुत्वोपादानम् । अनुभवध्वंसे स्मृतिहेतुत्वाभावान्नातिव्याप्तिः ।

ननु विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य कारणता सकलतान्त्रिकमतसिद्धा। यथा दण्डविशिष्टबुद्धिं प्रति दण्डज्ञानं कारणम् । दण्डविशिष्टबुद्धिर्नाम दण्डप्रकारकबुद्धिः। तथा च दण्डप्रकारकबुद्धित्वावच्छिन्नं प्रति दण्डज्ञानत्वेन कारणत्वमित्यापतितम् । दण्डप्रकारकबुद्धिः दण्डी पुरुष इत्याकारकबुद्धिस्तत्र दण्डज्ञानं कारणम् । न हि दण्डमजानानः पुमान् 'दण्डी पुरुष' इति प्रत्येति । एवं च यत्रायं दण्ड इति प्रत्यक्षं जातं तदनन्तरं दण्डी पुरुष इत्याकारकप्रत्यक्षमुत्पन्नं तत्र दण्डी पुरुष इत्याकारकप्रत्यक्षेऽतिव्याप्तिः। तद्धि स्वाव्यवहितपूर्वक्षणोत्पन्नदण्डज्ञानात्मकानुभवजन्यं जनिष्यमाणे दण्डी पुरुष इत्याकारकस्मरणे कारणं च स्मृतिं प्रत्यनुभवस्य कारणत्वात्तथा चानुभवजन्यत्वे सति स्मृतिहेतुत्वरूपभावनालक्षणस्य यथोक्तदण्डी पुरुष इत्याकारकानुभवे विद्यमानत्वादतिव्याप्तिरिति चेत्, अत्र ब्रूमः—अनुभवजन्यत्वं हि अनुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वम् । तत्र कारण-

अन्यथाकृतस्य पुनस्तदवस्थापादकः स्थितिस्थापकः कटादिपृथिवीवृत्तिः ॥६३॥

स्थितिस्थापकं लक्षयति—अन्यथेति ।

संख्यादयोऽष्टौ नैमित्तिकद्रवत्ववेगस्थितिस्थापकाः सामान्यगुणाः अन्ये रूपादयो विशेषगुणाः । द्रव्यविभाजकोपाधिद्वयसमानाधिकरणावृत्तिजातिमत्त्वं विशेषगुणत्वम् । (५४)

न्यायबोधिनी

तायामनुभवत्वावच्छिन्नत्वं निवेश्यते । तथा चानुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वमनुभवजन्यत्वमिति फलितम्, अतो नोक्तातिव्याप्तिस्तथा हि दण्डप्रकारकबुद्धित्वावच्छिन्नकार्यतानिरूपित दण्डज्ञाननिष्ठा या कारणता तस्या न दण्डानुभवत्वमवच्छेदकं दण्डानुभवादिव दण्डस्मरणादपि दण्डप्रकारकबुद्धेरुत्पत्तेः, अतो दण्डप्रकारकबुद्धित्वावच्छिन्नं प्रति अनुभवस्मरणसाधारणदण्डज्ञानत्वेनैव दण्डज्ञानस्य कारणतायाः स्वीकरणीयत्वेन दण्डज्ञानत्वस्यैव तदवच्छेदकत्वात् । तथा चानुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वस्योक्तप्रत्यक्षेऽभावान्नातिव्याप्तिः । भावनायां तु लक्षणमिदं वर्त्तते । तथा हि अनुभवेनैव भावनाख्यसंस्कारोत्पत्त्या भावनात्वावच्छिन्नं प्रत्यनुभवस्यानुभवत्वेनैव कारणतया भावनात्वावच्छिन्नकार्यतानिरूपितानुभवनिष्ठकारणतायामनुभवत्वमवच्छेदकम् । अतोऽनुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वं भावानायां वर्तत इति नासम्भवः । नन्वेवं स्मृतिहेतुत्वविशेषणवैयर्थ्यम्, तद्ध्यनुभवध्वंसेऽति-

---

( ५४ ) **कौमारिलास्तु**—धर्म्माधर्म्मशब्दानां गुणत्वमनङ्गीकुर्वाणा ध्वनिप्राकट्यशक्तीनां गुणत्वमाकाङ्क्षन्ते । तथा च तन्मते ध्वनिर्नाम शब्दाभिव्यञ्जको वायुगुणः । 'घटः प्रकाशते' 'प्रकटो घटः' इत्यादिव्यवहारदर्शनेन घटादिषु द्रव्येषु विशेषगुणभूतं प्रकाशपदार्थं प्राकट्यमित्युच्यते । शक्तिस्तु द्रव्यकर्म्मगुणाश्रया लौकिकवैदिकभेदेन द्वेधा । तदुक्तं **मानमेयोदये**—

"शक्तित्वसामान्यवतीं द्रव्यकर्म्मगुणाश्रयाम् ।
अर्थापत्तिप्रमागम्यां शक्तिमाहुः कुमारिलाः ॥" इति

आद्या पुनरर्थापत्तिगम्या वह्न्यादीनां दाहकत्वशक्तिः, द्वितीया च यागादीनां स्वर्गसाधकत्वशक्तिश्चोदनैकगम्या । इत्यास्तां विस्तरः ।

चलनात्मकं कर्म। ऊर्ध्वदेशसंयोगहेतुरुत्क्षेपणम् । अधोदेशसंयोगहेतुरपक्षेपणम् । शरीरसन्निकृष्टसंयोगहेतुराकुञ्चनम् । शरीरविप्रकृष्टसंयोगहेतुः प्रसारणम्। अन्यत्सर्वं गमनम्(५५)॥६४॥

कर्मणो लक्षणमाह—चलनेति॥ उत्क्षेपणादीनां कार्यभेदमाह—ऊर्ध्वेति। शरीरेति । वक्रतासम्पादकं कर्म आकुञ्चनम्। ऋजुतासम्पादकं प्रसारणमित्यर्थः ।

### न्यायबोधिनी

व्याप्तिवारणाय प्रागुपात्तम्। न हि यथोक्तानुभवजन्यत्वविवक्षायामनुभवध्वंसेऽतिव्याप्तिः प्रसज्यते। तथा हि ध्वंसत्वावच्छिन्नं प्रति प्रतियोगिनः कारणत्वं प्रतियोगित्वेन रूपेण, तत्तद्ध्वंसत्वावच्छिन्नं प्रति च तत्तत्प्रतियोगिव्यक्तेस्तत्तद्व्यक्तित्वेनेत्येवं ध्वंसप्रतियोगिनोः कार्यकारणभावः। तथा च ध्वंसनिष्ठकार्यतानिरूपिता याऽनुभवनिष्ठा कारणता तस्यां प्रतियोगित्वमवच्छेदकं तत्तद्व्यक्तित्वं च न त्वनुभवत्वमपीत्यनुभवध्वंसेऽनुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वरूपानुभवजन्यत्वविरहेणैवातिव्याप्तिवारणसम्भवात्कृतं स्मृतिहेतुत्वविशेषणेनेति चेत्, न, स्मृतावतिव्याप्तिवारणायैव तदुपादानात्। तथा हि स्मृतिं प्रत्यनुभव एव कारणं न तु स्मृतिरप्यतो घटस्मृतित्वावच्छिन्नं प्रति घटानुभवस्य घटानुभवत्वेनैव कारणत्वं न तु घटज्ञानत्वेन, तथा च घटस्मृतिनिष्ठकार्यतानिरूपिता या घटानुभवनिष्ठा कारणता तस्यां घटानुभवत्वमवच्छेदकम्, तेनानुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वस्य स्मृतौ विद्यमानत्वादतिव्याप्तिवारणाय स्मृतिहेतुत्वमुक्तम्। न हि स्मृतिः स्मृतिहेतुः। अतो न तत्रातिव्याप्तिरित्यलमनल्पजल्पनेन।

---

(५५) प्राभाकरास्तु—संयोगविभागाभ्यामनुमेयत्वमेव कर्मणो न तु प्रत्यक्षत्वमिति वदन्ति। तन्न। संयोगविभागमात्रस्यैव नेत्रगोचरत्वे ताभ्यां च कर्मानुमाने श्येनशैलसंयोगविभागाभ्यां शैलेऽपि कर्मकल्पनप्रसङ्गात्। 'यथा देवदत्तस्य गतिपूर्विकां देशान्तरप्राप्तिमवलोक्यादित्येऽपि गतिस्मरण'मिति भाष्यविरोधाच्च।

नित्यमेकमनेकानुगतं सामान्यम् (५६)। द्रव्यगुणकर्मवृत्ति।

सामान्यं लक्षयति—नित्यमिति। संयोगेऽतिव्याप्तिवारणाय—नित्यमिति। परमाणुपरिमाणादावतिव्याप्तिवारणाय—अनेकेति। अनुगतत्वं

न्यायबोधिनी

सामान्यं निरूपयति—नित्यमेकमिति। नित्यत्वे सत्यनेकसमवेतत्वं सामान्यलक्षणम्। नित्यत्वविशेषणानुपादानेऽनेकसमवेतत्वस्य संयोगादौ सत्त्वात्तत्रातिव्याप्तिस्तद्वारणाय नित्यत्वविशेषणम्। अनेकसमवेतत्वानुपादाने आकाशादावतिव्याप्तिस्तद्वारणायाऽनेकसमवेतत्वम्। अनेकसमवेतत्वानुपादाने नित्यत्वविशिष्टसमवेतत्वमात्रोक्तावाकाशगतैकत्वपरिमाणादौ जलपरमाणुगतरूपादौ चातिव्याप्तिः, जलपरमाणुगतरूपादेराकाशगतैकत्वपरिमाणादेर्नित्यत्वात् समवेतत्वाच्च, अतः अनेकेति।

---

(५६) "सामान्यं नित्यमेकं स्यादनेकसमवायि चे"ति स्वकीयकारिकाव्याख्यानावसरे **तार्किकरक्षायां** वरदराजः,—

"नित्यमनेकसमवायीत्युक्ते सलिलाद्यनेकपरमाणुगतरूपादीनामपि प्रसङ्गाद् 'एकं स्या'दित्युक्तम्।" इति।

**दीपिकाप्रकाशे** नीलकण्ठभट्टास्तु—"एकपदं स्वरूपकथनमिति द्रष्टव्यम्" इत्याहुः।

"नित्यमेकमनेकवृत्तिसामान्यमिति लक्षणं सूचित"मिति **किरणावली**सन्दर्भव्याख्यानावसरे **प्रकाशकृतः**,—

"एकमिति स्वरूपाभिधानमात्रं न तु लक्षणार्थमित्येके। एकं लक्षणमिति योज्यम्। लक्षणान्तरं चासमवायित्वे सति अनेकसमवेतत्वमित्यन्ये। अनेकवृत्तित्वमनेकाधारत्वं तच्चाभावसमवाययोरप्यस्तीत्यत उक्तमेकमसहायम्। अभावसमवाययोश्च प्रतियोगिसम्बन्धिनौ सहायावित्यपरे। अनेकवृत्तित्वं च स्वाश्रयान्योन्याभावसामानाधिकरण्यम्।" इति प्राहुः।

वङ्गीयव्रजकुमारविद्यारत्नभट्टाचार्यास्तु अनेकानुगतत्वस्य स्वप्रतियोगिवृत्तित्वस्वानुयोगिवृत्तित्वोभयसम्बन्धेन भेदविशिष्टस्वरूपस्य स्ववृत्तित्वस्वेतरवृत्तित्वोभयसम्बन्धेन वस्तुविशिष्टस्वरूपस्य वा परिष्कार्य्यतया जलीयपरमाणुरूपेऽतिव्याप्तिः। एकधर्म्मावच्छिन्नाधेयत्वस्यैकतया रूपत्वावच्छिन्ननिरुक्तोभयवृत्तित्वस्य तद्रूपेऽपि सत्त्वात्, अत एकपदम्। तथा च भेदविशिष्टोभयावृत्तिधर्म्मवत्त्वस्य लाभात्

तद्द्विविधं परापरभेदात् । परं सत्ता । अपरं द्रव्यत्वादि ॥६५॥

समवेतत्वम् । घटाद्यत्यन्ताभावो घटाद्यनुगतोऽप्यसमवेत इति नाभावादावतिव्याप्तिः ।

नित्यद्रव्यवृत्तयो व्यावर्त्तका विशेषाः (५७) ॥६६॥

विशेषं लक्षयति—नित्येति ।

न्यायबोधिनी

नित्यद्रव्यवृत्तय इति । नित्यद्रव्येषु परमाण्वादिषु वर्तमानाः, अत एव व्यावर्तकाः—इतरभेदानुमितिहेतवः । नित्यद्रव्यवृत्तित्वरूपपक्षधर्मताप्रयोज्येतरभेदानुमापकताशालिन इत्यर्थः । नित्यद्रव्यनिष्ठविशेष्यतानिरूपितैकमात्रवृत्तिभेदानुमितिजनकतावच्छेदकप्रकारताश्रयत्वं विशेषाणां लक्षणमिति भावः । पार्थिवपरमाणौ जलादिभेदानुमापकगन्धेऽतिव्याप्तिवारणाय एकमात्रवृत्तित्वं भेदविशेषणम् । घटादौ तदितरभेदानुमापके तद्रूपादावतिव्याप्तिवारणाय निरूपितान्तं प्रकारताविशेषणम् । एतेन व्यावर्तका इत्यस्य नित्यद्रव्यविशेष्यकेतरभेदानुमितिप्रयोजका इत्यर्थकतया लक्षणपरत्वेन साफल्येऽपि नित्यद्रव्यवृत्तय इति विफलमेव स्वरूपाख्यानस्यापि कृतत्वादिति प्रत्युक्तम् ।

---

नोक्तातिव्याप्तिः । वैशिष्ट्यं च स्वप्रतियोगिवृत्तितावच्छेदकत्वस्वानुयोगिवृत्तितावच्छेदकत्वोभयसम्बन्धेन । यद्वा वस्तुविशिष्टोभयावृत्तिधर्म्मवत्त्वं वक्तव्यम् । वैशिष्ट्यं च स्ववृत्तितावच्छेदकत्वस्वेतरावृत्तितावच्छेदकत्वोभयसम्बन्धेन । एवञ्च नोक्तातिव्याप्तिरिति प्राहुः ।

"तच्चानुवृत्तिप्रत्ययकारण"मितिभाष्यव्याख्यायां सूक्तिकाराः—"नानाधर्म्मिण्येकप्रकारकप्रमाप्रकारीभूतो यो धर्म्मः स सामान्यमित्यर्थः । प्रकारत्वं च समवायेन ग्राह्यम्" । इत्याहुः ।

"जातित्वञ्च समवायसम्बन्धेन शाब्दबोधीयनिरवच्छिन्नप्रकारत्वम्, न तु नित्यत्वे सत्यनेकसमवेतत्वं तत् गौरवात् समवायगामित्वाच्च ।" इत्यस्मद्गुरुचरणाः ।

(५७) नानाग्रन्थेषु विशेषस्य बहूनि लक्षणानि दृश्यन्ते । तत्र "निःसामान्यत्वे सति एकद्रव्यमात्रवृत्तित्वमिति किरणावलीप्रकाशे वर्धमानोपाध्यायाः । "सर्वदा द्रव्यसमवेतत्वे सति नित्यद्रव्यवृत्तिजातिगुणाभ्यां भिन्नत्वमेव प्रकृते विशेषत्व"मिति सूक्तिकृतः । तेषां लक्षणान्तरन्तु तत्रैव द्रष्टव्यम् । "नित्यमात्रवृत्तिवृत्तिपदार्थविभाजकोपाधिमत्त्वं विशेषत्वम् ।" इति कणादरहस्ये शङ्करमिश्राः ।

नित्यसम्बन्धः समवायः। अयुतसिद्धवृत्तिः। ययोर्द्वयोर्मध्ये एकमविनश्यदपराश्रितमेवावतिष्ठते तावयुतसिद्धौ। अवयवावयविनौ गुणगुणिनौ क्रियाक्रियावन्तौ जातिव्यक्ती विशेषनित्यद्रव्ये चेति ॥६७॥

समवायं लक्षयति—नित्येति। संयोगेऽतिव्याप्तिवारणाय—नित्येति। आकाशादावतिव्याप्तिवारणाय—सम्बन्ध इति। अयुतसिद्धलक्षणमाह—ययोरिति।

'नीलो घटः' इति विशिष्टप्रतीतिः विशेषणविशेष्यसम्बन्धविषया विशिष्टप्रत्ययत्वात् दण्डीतिप्रत्ययवदिति समवायसिद्धिः (५८) अवयवावयविनाविति। द्रव्यसमवायिकारणमवयवः। तज्जन्यं द्रव्यमवयवि।

### न्यायबोधिनी

**समवायं निरूपयति—नित्येति। सम्बन्धत्वं विशिष्टप्रतीतिनियामकत्वम्। तावन्मात्रोक्तौ संयोगेऽतिव्याप्तिरतो नित्य इति विशेषणम्। ययोर्द्वयोर्मध्य इति। यन्निष्ठकालनिरूपिताधेयतासामान्यं यदवच्छिन्नं तदुभयान्यतरत्वमयुतसिद्धत्वमित्यर्थः।**

---

"विशेषोऽपि च न पदार्थान्तरं मानाभावात्। विनापि व्यावर्तकं धर्म्मं परेषां विशेषाणामिव नित्यानां द्रव्याणामपि स्वत एव व्यावर्त्तकत्वात्।" इति **पदार्थतत्त्वनिरूपणे** शिरोमणिभट्टाचार्य्याः।

अत्रास्मद्गुरुचरणाः—"अथ तत्तत्परमाणुनिष्ठमपरपरमाणुभ्यो व्यावृत्तत्वं परमाणुव्यक्तिप्रयोज्यमेवास्तां किं विशेषनामकाऽनन्तपदार्थान्तरस्वीकारेण।...... इति चेन्न, यतस्तत्तत्परमाणुव्यक्तौ तत्तद्व्यक्तिनिष्ठव्यावृत्तताया: प्रयोजकत्वं, वा तत्परमाणुनिष्ठनिखिलनित्यगुणव्यक्तिषु, इति विनिगमनाविरहेणाऽनन्तप्रयोजकतापत्तिभिया तत्प्रयोजकत्वेन पदार्थान्तरसिद्धेरावश्यकत्वात्।......... तदेव पदार्थान्तरं विशेषनाम्नोपगीतम्। प्रयोजकतया साधनीयेन समं का विनिगमनाविरहाशङ्का। अनुमितेः पूर्वं तादृशपदार्थान्तरस्याऽज्ञातत्वात्।......... ईश्वरसिद्ध्यर्थमप्येवं रीतिरवलम्बनीया।" इति प्राहुः। एतद्विचारविस्तरस्तु तेषां **विविधविचारे** द्रष्टव्यः। इति संक्षेपः।

(५८) एतच्च वैशेषिकमतम्। तन्मत एव समवायस्यानुमानेन सिद्धेः। तदुक्तं **भाष्ये**—"अयुतसिद्धानामाधार्य्याधारभूतानां यः सम्बन्ध इह प्रत्ययहेतुः स समवायः" इति।

अनादिः सान्तः प्रागभावः, उत्पत्तेः पूर्वं कार्यस्य। सादिरनन्तः प्रध्वंसः उत्पत्त्यनन्तरं कार्यस्य। त्रैकालिकसंसर्गावच्छि-

प्रागभावं लक्षयति—अनादिरिति। आकाशादौ अतिव्याप्तिवारणाय सान्त इति। घटादौ अतिव्याप्तिवारणाय अनादिरिति। प्रतियोगिसमवायिकारणवृत्तिः प्रतियोगिजनकः 'भविष्यतीति' व्यवहारहेतुः प्रागभावः। ध्वंसं लक्षयति—सादिरिति। घटादौ अतिव्याप्तिवारणाय अनन्त इति। आका-

न्यायबोधिनी

अत्यन्ताभावं निरूपयति—त्रैकालिकेति। प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वे सत्यन्योन्याभावभिन्नत्वे सत्यभावत्वमत्यन्ताभावस्य लक्षणम्। ध्वंसप्रागभावान्योन्याभावाकाशादीनां वारणाय यथाक्रमं विशेषणोपादानम्। वस्तुतस्तु संसर्गाभावत्वं तादात्म्यभिन्नसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वम्। ध्वंसप्रागभावयोश्च न संसर्गावच्छिन्नप्रतियोगिताकत्वमिति तेनैव तद्वारणे त्रैकालिकेति स्वरूपाख्यानमेवेति बोध्यम्।

---

व्याख्यातञ्च किरणावलीकारैः—"प्रमाणमाह। इह प्रत्ययहेतुरिति। इह तन्तुषु पट इह पटे शुक्लत्वमिह गवि गोत्वमित्यादयः प्रत्ययाः सम्बन्धमन्तरेणानुपपद्यमानास्तं व्यवस्थापयन्ती"ति। (२६ पृ०)

न्यायनये च प्रत्यक्ष एव समवायः। तथा च न्यायवार्त्तिके—"समवाये चाभावे च विशेषणविशेष्यभावादिति।" (१।१।४)

तदुक्तं भाषापरिच्छेदकृद्भिरपि—"प्रत्यक्षं समवायस्य विशेषणतया भवे"दिति।

इदमत्रावधेयम्—समवायस्य लौकिकप्रत्यक्षं संसर्गविधयैव न तु प्रकारविधया विशेष्यविधया वा। सम्बन्धसाक्षात्कारे च प्रतियोग्यनुयोग्युभयसाक्षात्कारः कारणम्, ईदृशसाक्षात्कारे इन्द्रियसन्निकर्षसहकारित्वनियमार्थं समवायसाक्षात्कारं प्रति कारणतया पृथक् सन्निकर्षोऽभिहितः। अन्यथा इन्द्रियसंयुक्तसमवायादिरूपायाः सामान्यसामग्रीतो रूपादिप्रत्यक्षस्येव प्रतियोग्यनुयोगिप्रत्यक्षं विनापि समवायसाक्षात्कारापत्तिर्दुर्वारैव। अत एव निर्विकल्पके घटघटत्वोभयविषयत्वमिति प्राचीनपरम्पराव्यवस्थापि सुष्ठु सङ्गता। केवलोपनीतप्रकारकत्वनिर्वाहार्थं निर्विकल्पकस्वीकारावश्यकत्वे तत्र घटविषयकत्वस्य नियमतो व्यवस्थाया असङ्गतत्वापत्तिर्घटत्वविषयकत्वेनैवोद्देश्यसिद्धिसम्भवात्। इति गुरुचरणैरुपदिष्टः परैरपरिशीलितः पन्थाः।

अप्रतियोगिताकोऽत्यन्ताभावः । यथा भूतले घटो नास्तीति । तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकोऽन्योन्याभावः । यथा घटः पटो नेति ॥६८॥

शादौ अतिव्याप्तिवारणाय सादिरिति । प्रतियोगिजन्यः प्रतियोगिसमवायिकारणवृत्तिः 'ध्वस्त' इति व्यवहारहेतु' ध्वंसः । अत्यन्ताभावं लक्षयति—त्रैकालिकेति । अन्योन्याभावेऽतिव्याप्तिवारणाय संसर्गावच्छिन्नेति । ध्वंसप्रागभावयोरतिव्याप्तिवारणाय त्रैकालिकेति । अन्योन्याभावं लक्षयति—तादात्म्येति । प्रतियोगितावच्छेदकारोप्यसंसर्गभेदात् एकप्रतियोगिकयोरत्यन्ताभावान्योन्याभावयोर्बहुत्वम् । 'केवलदेवदत्ताभावात् दण्ड्यभावः' इति प्रतीत्या विशिष्टाभावः, 'एकसत्त्वेऽपि द्वौ न स्तः' इति प्रतीत्या द्वित्वावच्छिन्नाभावः, संयोगसम्बन्धेन च घटवति समवायसम्बन्धेन घटाभावः, तत्तद्घटाभावाद्घटत्वावच्छिन्नप्रतियोगिताकसामान्याभावश्चातिरिक्तः। एवमन्योन्याभावोऽपि । घटत्वेन पटो नास्तीति व्यधिकरणधर्मावच्छिन्नाभावो नाङ्गीक्रियते । पटे घटत्वं नास्तीति तस्यार्थः । अतिरिक्तत्वे स केवलान्वयी । सामयिकाभावोऽप्यत्यन्ताभाव एव समयविशेषे प्रतीयमान । घटाभाववति घटानयने अत्यन्ताभावस्य अन्यत्र गमनाभावेऽपि अप्रतीतेर्घटापसरणे सति प्रतीतेर्भूतले घटसंयोगप्रागभावध्वंसयोर्घटात्यन्ताभावप्रतीतिनियामकत्वं कल्प्यते । घटवति तत्संयोगप्रागभावध्वंसयोरसत्त्वादत्यन्ताभावस्याप्रतीतिः । घटापसरणे च संयोगध्वंससत्त्वात्प्रतीतिरिति । केवलाधिकरणादेव नास्तीति व्यवहारोपपत्तौ अभावो न पदार्थान्तरमिति गुरवः । तन्न । अभावानङ्गीकारे कैवल्यस्य निरङ्कुशत्वस्य स्यात् (५९) ।

### न्यायबोधिनी

अन्योन्याभावं निरूपयति—तादात्म्येति । अभावत्रयवारणाय विशेषणम् । घटाभाववान्नेति प्रतीतिविषयघटादिवारणाय विशेष्यम् ।

---

(५९) "न वयं षट्पदार्थवादिनो वैशेषिकादिवदि"ति सूत्रादिदर्शनात् अभावपदार्थो न महर्षिकणादाभिमत इति केचिन्मन्यन्ते । तन्न समीचीनम्, यतो महर्षिणा "क्रियागुणव्यपदेशाभावात् प्रागसत्"—(९।१।१) इत्यादिसूत्रैश्चतुर्वि-

अभावाभावो भाव एव, नातिरिक्तः, अनवस्थाप्रसङ्गात्। ध्वंसप्रागभावः प्रागभावध्वंसश्च प्रतियोग्येवेति प्राञ्चः। अभावाभावः अतिरिक्त एव।

धानामभावानां लक्षणानि प्रत्यक्षप्रकाराश्च प्रदर्शितानि। महर्षिरक्षपादोऽपि "लक्षितेष्वलक्षणलक्षितत्वादलक्षितानां तत्प्रमेयसिद्धिः"—(२।२।८) "प्रागुत्पत्तेरभावोपलब्धिश्च"—(२।२।१२) इतिसूत्रद्वयेनाऽत्यन्ताभावादीनुपदिदेश।

अनङ्गीकृतेऽप्यभावानां पदार्थान्तरत्वे प्राभाकरैः, कुमारिलभट्टपादमतेऽस्त्यभावश्चतुर्विध एव। तथा च **श्लोकवार्त्तिके** अभावपरिच्छेदे—

"क्षीरे दध्यादि यन्नास्ति प्रागभावः स उच्यते।
नास्तिता पयसो दध्नि प्रध्वंसाभाव इष्यते॥
गवि योऽश्वाद्यभावस्तु सोऽन्योन्याभाव उच्यते।
शिरसोऽवयवा निम्ना वृद्धिकाठिन्यवर्जिताः॥
शशशृङ्गादिरूपेण सोऽत्यन्ताभाव उच्यते॥"

**मानमेयोदयकृतस्तु**—

"क्षीरे यो दध्यभावः स इह निगदितः प्रागभावः प्रवीणैः
प्रध्वंसाभावमाहुर्दधनि तु पयसोऽभावमाचार्य्यपादाः।
अत्यन्ताभावसंज्ञो भवति हि पवनाद्येषु रूपाद्यभाव-
श्चान्योन्याभावमाशु स्फुटयति तु घटादौ पटत्वाद्यभावः॥"

इत्याहुः।

**न्यायमञ्जरी**कारास्तु—"तस्मान्नास्तीतिप्रत्ययगम्योऽभाव इति सिद्धम्। स च द्विविधः प्रागभावः प्रध्वंसाभावश्चेति। चतुर्विध इत्यन्ये। इतरेतराभावः अत्यन्ताभावश्च तौ च द्वाविति। षट्प्रकार इत्यन्ये। अपेक्षाभावः सामर्थ्याभावस्ते च चत्वार इति।" इत्याहुः।

भोजराजस्तु **सरस्वतीकण्ठाभरणे**—

"असत्ता या पदार्थानामभावः सोऽभिधीयते।
प्रागभावादिभेदेन स षड्विध इहेष्यते॥"

इत्यादिग्रन्थेन 'खपुष्पं नास्ती'ति सौगतमतसिद्धमत्यन्ताभावविशेषं सामर्थ्याभावं कणादाद्युक्तमभावचतुष्टयं चेत्यभावषट्कं दर्शयामास। विशेषश्च तत्रत्य**रत्नेश्वरकृतटीकायां** द्रष्टव्यः।

सौगतमत इव कन्दलीकारमतेऽपि अलीकप्रतियोगिकाभाव एवाऽत्यन्ताभावः। तदुक्तं "......अत्यन्ताभावे तु सर्वथा असद्भूतस्यैव बुद्धावारोपितस्य देशकालानवच्छिन्नः प्रतिषेधः, यथा षट्पदार्थेभ्यो नान्यत् प्रमेयमस्तीति।"

तृतीयाभावस्य प्रथमाभावरूपत्वात् नानवस्थेति नवीनाः (६०)

**सर्वेषामपि पदार्थानां यथायथमुक्तेष्वन्तर्भावात् सप्तैव पदार्था इति सिद्धम् ॥६१॥**

ननु "प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्ताऽवयवतर्कनिर्णय-वादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निश्रेयसा-

**न्यायबोधिनी**

ननु सादृश्यादीनामतिरिक्तपदार्थानामनिरूपणेन न्यूनतेत्यत आह सर्वेषामिति । "प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयव-

(६०) इदमत्रावधातव्यम्,—नव्यन्यायनायकै रघुनाथशिरोमणिभिः **सिद्धान्तलक्षणदीधितौ**—"अभावत्वञ्चेदमिह नास्तीदमिदं न भवतीतिप्रतीतिसाक्षिकाभावाभावसाधारणः स्वरूपसम्बन्धविशेष" इतिग्रन्थेनाऽभावत्वस्य भावाभावसाधारणत्वमुक्तम् । तदीयस्वानुरूपशिष्यैरपि मथुरानाथतर्कवागीशैः **सिद्धान्तलक्षणदीधितिरहस्ये**—"तथापि सर्वेषामेव भावरूपाणामभावरूपाणां वा अभावानां ..सर्वसिद्धतये"त्यादि स्वहस्तितम् । **विशेषव्याप्तिदीधितावपि** रघुनाथैः—"न हि घटभिन्नभेदो घटत्वादतिरिच्यते, आवश्यकक्लृप्तघटत्वेनैवोपपत्तौ अतिरिक्तकल्पनायां मानाभावा"दिति सन्दर्भेण घटत्वाद्यनुगतधर्म्माभावाभावस्य घटत्वादिस्वरूपत्वमेवाङ्गीकृतम् । तर्कालङ्कारजगदीशैरपि "हिमावृत्तेरभावत्वस्य, भाव इवाभावेऽपि सत्त्वा"दिति **विशेषव्याप्तिदीधितिव्याख्यायामभिहितम्** । एवञ्च **पदार्थतत्त्वनिरूपणे** "घटाद्यभावस्याप्यभावोऽतिरिक्त एव, घटादिमति तदभावो नास्तीत्यबाधिताभावत्वप्रत्ययात् । न चैवमनवस्था एकस्यैव घटाभावस्य स्वाभावाभावरूपत्वे विरोधाभावा"दिति रघुनाथोक्तिरननुगतघटादीनामेवाभावस्याभावोऽतिरिक्तो न तु अनुगतघटत्वादीनामपीति तात्पर्य्येण समर्थनीया । तदाह **पदार्थतत्त्वनिरूपणटीकायां** न्यायालङ्कारो रघुदेवः—

"न च भावाभावसाधारणमभावत्वमखण्डोपाधिरित्युक्तौ नायं दोष इति वाच्यम्, एवं सति लाघवादेव घटाभावाभावस्यातिरिक्तत्वसिद्धेः । लाघवानादरेऽभावमात्रस्यानतिरिक्तत्वसिद्धिप्रसङ्गादित्यादिकमवधेयम् ।" इति ।

केषाञ्चित् प्राचीनन्यायविदां नयेऽप्यभावाभावोऽरिक्तः । तदुक्तं **पदार्थरत्नमालायाम्**—

"लीलावतीकारास्तु अभावत्वधियः प्रमात्वानुरोधेनाभावाभावोऽतिरिक्त एव । न चानावस्था घटात्यन्ताभावप्रतियोगिकस्यात्यन्ताभावस्याभावो घटात्यन्ताभावानतिरिक्त इत्याहुः ।"

धिगमः" इति न्यायशास्त्रे षोडशपदार्थानामुक्तत्वात् कथं सप्तैवेत्यत आह—सर्वेषामिति । सर्वेषां सप्तस्वेवान्तर्भाव इत्यर्थः । 'आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्' इति द्वादशविधं प्रमेयम् । प्रवृत्तिर्धर्माधर्मौ । रागद्वेषमोहा दोषाः । रागः इच्छा । द्वेषो मन्युः । मोहः शरीरादौ आत्मत्वभ्रमः । प्रेत्यभावो मरणम् । फलं भोगः। अपवर्गो मोक्षः । स च स्वसमानाधिकरणदुःखप्रागभावासमानकालीनदुःखध्वंसः । प्रयोजनं सुखप्राप्तिः दुःखहानिश्च । दृष्टान्तो महानसादिः। प्रामाणिकत्वेन अभ्युपगतोऽर्थः सिद्धान्तः। निर्णयो निश्चयः । स च प्रमाणफलम् । तत्त्वबुभुत्सोः कथा वादः । उभयसाधनवती विजिगीषुकथा जल्पः । स्वपक्षस्थापनहीना वितण्डा । कथा नाम नानावक्तृकः पूर्वोत्तरपक्षप्रतिपादकवाक्यसन्दर्भः । अभिप्रायान्तरेण प्रयुक्तस्यार्थान्तरं प्रकल्प्य दूषणं छलम् । असदुत्तरं जातिः । साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यकार्याकार्यसम जातयः ।

वादिनोऽपजयहेतुर्निग्रहस्थानम् । प्रतिज्ञाहानि:, प्रतिज्ञान्तरं, प्रतिज्ञाविरोधः, प्रतिज्ञासन्न्यासः, हेत्वन्तरम्, अर्थान्तरम्, निरर्थकम्, अविज्ञातार्थम्, अपार्थकम्, अप्राप्तकालं, न्यूनम्, अधिकम्, पुनरुक्तम्, अननुभाषणम्, अज्ञानम्, अप्रतिभा, विक्षेपः, मतानुज्ञा, पर्यनुयोज्योपेक्षणं, निरनुयोज्यानुयोगः, अपसिद्धान्तः, हेत्वाभासाश्च निग्रहस्थानानि । शेषं सुगमम् (६१)

न्यायबोधिनी

तर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः' इति न्यायस्यादिमसूत्र उक्तानां प्रमाणप्रमेया-

(६१) अथ न्यायशास्त्रोक्तानां षोडशपदार्थानां वैशेषिकदर्शनप्रतिपादितेषु सप्तसु पदार्थेष्वन्तर्भूतत्वेऽपि द्रव्यादीनां न्यायदर्शनोक्ते कुत्र पदार्थेऽन्तर्भावः ? न च ते प्रमेय एवान्तर्भवितुमर्हन्ति, यतः—"आत्मशरीरे" त्यादिसूत्रे—(१।१।९)—महापणाऽऽत्मादीनामेव प्रमेयत्वं परिभाषितम् । इति चेद्, येषां तत्त्वज्ञानादपवर्गो मिथ्याज्ञानात् संसारस्तेषामेव पदार्थानां प्रतिपित्सितत्वात् । तदुक्तं वात्स्यायनभाष्ये,—

ननु करतलानलसंयोगे सत्यपि, प्रतिबन्धके सति दाहानुत्पत्तेः शक्तिः पदार्थान्तरमिति चेत्, न, प्रतिबन्धकाभावस्य कार्यमात्रे कारणत्वेन शक्तेरनुपयोगात्। कारणत्वस्यैव शक्तिपदार्थत्वात्।

न्यायबोधिनी

दीनामित्यर्थः। तद्भिन्नत्वविशिष्टतद्भूतभूयोधर्मरूपसादृश्यस्यापि घटपटादिरूपत्वेन नातिरिक्तत्वमेवमन्येषामप्यूह्यम्।

---

"अस्त्यन्यदपि द्रव्यगुणकर्म्मसामान्यविशेषसमवायाः प्रमेयम्। तद्भेदेन चापरिसंख्येयम्। अस्य तु तत्त्वज्ञानादपवर्गो मिथ्याज्ञानात् संसार इत्यत एतदुपदिष्टं विशेषेणेति।"—(१।१।९)

अधिकं मम न्यायवैशेषिकतत्त्वे द्रष्टव्यम्।

अथ केषां मते कति पदार्थाः? उच्यते—

कुमारिलभट्टमते च पदार्थाः पञ्च। तदुक्तं मानमेयोदये प्रमेयपरिच्छेदे—

"वयं तावत् प्रमेयं तु द्रव्यजातिगुणक्रियाः।
अभावश्चेति पञ्चैतान् पदार्थानाद्रियामहे॥" इति।

द्रव्यं गुणः कर्म्म सामान्यमिति चत्वारः पदार्थाः इति तु तातभट्टाः।

प्राभाकरास्तु—

"द्रव्यं गुणः कर्म्म च जातिशक्ती
सादृश्यसंख्ये समवाय एते।
अष्टौ पदार्था इह तान् विभज्य
संक्षिप्य वक्ष्यामि गुरोर्मतेन॥" इत्याहुः।

मीमांसकैकदेशिचन्द्रमते तु अष्टावेते, उपचारः संस्कारोऽन्धकारश्चेति एकादश पदार्थाः। एते एकादश, औपादानिकश्चेति द्वादश पदार्था इति महार्णवकाराः।

"मुख्यो माध्यमिको विवर्त्तमखिलं शून्यस्य मेने जगद्
योगाचारमते तु सन्ति मतयस्तासां विवर्त्तोऽखिलः।
अर्थोऽस्ति क्षणिकस्त्वसावनुमितो बुद्ध्येति सौत्रान्तिकः
प्रत्यक्षं क्षणभङ्गुरं च सकलं वैभाषिको भाषते।"

भट्टमते च द्रव्याण्येकादशविधानि। तथा चोक्तं मानमेयोदये—

"पृथिवी सलिलं तेजः पवमानस्तमस्तथा।
व्योमकालदिगात्मानो मनः शब्द इति क्रमात्॥"—(६६ पृ०)

तेषां द्रव्यलक्षणन्तु परिमाणाश्रयत्वम्। तदुक्तं तत्रैव—

"परिमाणगुणाधारं द्रव्यं द्रव्यविदो विदुः।" इति (६५ पृ०)

वैशेषिकशास्त्रप्रसिद्धा द्रव्यगुणकर्म्मसामान्यविशेषसमवायरूपा भावपदार्थाः प्रतिपादितास्तावद् वैद्यकशास्त्रेऽपि । तथा च **चरकसंहितायाम्**—

"महर्षयस्ते ददृशुर्यथावज्ज्ञानचक्षुषा ।
सामान्यं च विशेषं च गुणान् द्रव्याणि कर्म्म च ।
समवायञ्च ——————— ॥"

सूत्रस्थानम् १।२७–२८

उक्तञ्च "सामान्यमेकत्वकरं विशेषस्तु पृथक्त्वकृ"दिति चरककारिकाव्याख्यानावसरे **चक्रदत्तैः**—"अयञ्च सामान्यविशेषवादो ग्रन्थविस्तरभयादायुर्वेदोपयुक्तधर्म्ममात्रेणोक्तः, विस्तरस्त्वस्य वैशेषिके बोद्धव्यः। इति ।"

तदस्ति विमानस्थानेऽपि—"द्रव्यगुणकर्म्मसामान्यविशेषसमवायाः स्वलक्षणैः श्लोकस्थाने पूर्वमुक्ताः ।" (८।६।२१) इति

द्रव्याणि च तन्मते—

"खादीन्यात्मा मनः कालो दिशश्च द्रव्यसङ्ग्रहः ।"

इति नवैव । 'महाभूतानि खं वायुरग्निरापः क्षितिस्तथे"त्यग्रे खादीनां वक्ष्यमाणत्वात् ।

द्रव्यलक्षणं तु—

"यत्राश्रिताः कर्म्मगुणाः कारणं समवायि यत् ।
तद् द्रव्यम् ——————— ॥"

( सूत्रस्थानम् १।५० )

प्रतिपादितञ्चैवमेव **सुश्रुतसंहितायामपि**—"द्रव्यलक्षणन्तु क्रियागुणवत् समवायिकारणमिति ।" ( सूत्रस्थानम् ४०।६ )

कर्म्मवत्त्वमत्र कर्म्मवद्वृत्तिपदार्थविभाजकोपाधिमत्त्वम् । गुणवत्त्वमपि तथैव व्याख्येयं गुणात्यन्ताभावविरोधित्वं वा । तेन गगनादौ उत्पत्तिकालावच्छिन्नघटादौ च नाव्याप्तिः । यद्वा स्वजन्यसंयोगवत्त्वसम्बन्धेन स्वजन्यविभागवत्त्वसम्बन्धेन वा कर्म्मवत्त्वं द्रव्यलक्षणम् । गगनादावपि तादृशसंयोगवत्त्वसम्बन्धेन कर्म्मसत्त्वान्नाव्यापकम् । एतदेव द्रव्यलक्षणं महर्षिकणादाभिमतम् । तथा च **वैशेषिकसूत्रे**—"क्रियागुणवत् समवायिकारणमिति द्रव्यलक्षणम् ।"

गुणास्तु वैद्यकसिद्धान्ते एकचत्वारिंशत् । तदुक्तं—"सार्था गुर्व्वादयो बुद्धिः प्रयत्नान्ताः परादयः । गुणाः प्रोक्ताः—(१।१।४८) इति चरकग्रन्थव्याख्यानावसरे **चक्रदत्तपाणिभिः**—

"अनेन त्रिविधा अपि वैशेषिका', सामान्या, आत्मगुणाश्चोद्दिष्टाः । तत्रार्थाः शब्दस्पर्शरूपरसगन्धा. । तदुक्तं—अर्थाः शब्दादयो ज्ञेया गोचरा विषया गुणा

ननु भस्मादिना कांस्यादौ शुद्धिदर्शनादाधेयशक्तिरङ्गीकार्येति चेत्, न, भस्मादिसंयोगसमानकालीनाऽस्पृश्यस्पर्शप्रतियोगिकयावदभावसहित-भस्मादिसंयोगध्वंसस्य शुद्धिपदार्थत्वात् ( ६२ )

इति। एते च वैशेषिकाः।.........गुर्वादयस्तु—गुरुलघुशीतोष्णस्निग्धरूक्षमन्द-तीक्ष्णस्थिरसरमृदुकठिनविशदपिच्छिलश्लक्ष्णखरस्थूलसूक्ष्मसान्द्रद्रवा विंशतिः। एते च सामान्यगुणाः।.........बुद्धिर्ज्ञानम्। प्रयत्नोऽन्तो येषां ते प्रयत्नान्ताः। एतेन इच्छाद्वेषसुखदुःखप्रयत्नानां ग्रहणम्। वचनं हि—'इच्छा द्वेषः सुखं दुःखं प्रयत्नश्चेतना धृतिः। बुद्धिः स्मृतिरहङ्कारो लिङ्गानि परमात्मनः। इति। इह तु चेतनादीनां बुद्धिग्रहणेनैव ग्रहणम्।.........परादयो यथा—'परापरत्वे युक्तिश्च संख्या संयोग एव च। विभागश्च पृथक्त्वं च परिमाणमथापि च। संस्कारोऽभ्यास इत्येते गुणाः प्रोक्ताः परादयः।'

अभावोऽपि न खलु नानुमतो वैद्यकशास्त्रे। तदुक्तं चरकसंहितायाम्—"द्विविधमेव खलु सर्व्वं सच्चासच्चेति।" (सूत्रस्थानम् ११।१७) व्याख्यातञ्च चक्र-दत्तैः,—"सदिति विधिविषयप्रमाणगम्यं भावरूपम्। असदिति निषेधविषय-प्रमाणगम्यमभावरूपम्।" इति।

तस्माद् दृष्टफलशास्त्रेऽपि परिगृहीताः कणादोक्ताः सप्त पदार्था एव इति सर्व्वं चतुरस्रम्।

(६२) प्रशस्तपादभाष्यसेतौ पद्मनाभमिश्रैर्मतमिदमित्थमुपदर्शितम्,—

"केचित्तु संस्कारकत्वाभिमतं यद् द्रव्यं भस्मादि तस्य यः सम्बन्धः तत्-समानकालीनो य उपहर्त्तृचाण्डालादिसम्बन्धप्रतियोगिको यावाननादिः संसर्गाभावः-प्रागभावादिस्तत्सहितः संस्कारकसंस्करणीयसम्बन्धोत्पत्तिध्वंसः शुद्धिः, तदभाव एवाशुद्धिः। एतस्य विशिष्टस्याभावस्तु न विशेष्याभावात्, उत्पत्तिध्वंसस्य विशेष्यस्यानन्ततया ध्वंसासम्भवात्, किन्तु विशेषणादिसंसर्गाभावात्, प्रतियोगिन उत्पत्त्या प्रागभावनाशसम्भवादित्याहुः।"—( ७० पृ० ) अधिकबुभुत्सुभि-रेतन्मतविचारादिकं तत्रैवानुसन्धेयम्।

साम्प्रदायिकास्तु—शुद्ध्यशुद्ध्यभिमानिदेवतासन्निधेरेव भस्मादिसंयोगेन जन-नात्। सन्निधानन्तु यद्यपि कायिकं न सम्भवति, कांस्यादीनामनन्तानां परस्परं व्यवहितदेशसत्त्वेनानन्तकायकल्पनापत्तेः, तावद्दूरवर्त्तिमहापरिमाणैककायकल्पनेऽपि गौरवापत्तेः, किन्तु बौद्धम्। यद्वा शुद्धिसाधकस्य भस्मसंयोगादेः श्रुतिसि-द्धतया तज्जन्यो धर्म्मविशेष एव शुद्धिः। चाण्डालादिसंयोगजन्यस्तन्नाशश्चा-शुद्धिरिति। अत एवाधेयशक्तिविशेषः शुद्धिस्तदभावश्चाशुद्धिरिति भट्टभाषितम्,

स्वत्वमपि न पदार्थान्तरम्। यथेष्टविनियोगयोग्यत्वस्य स्वत्वरूपत्वात् (६३) तदवच्छेदकं च प्रतिग्रहादिलब्धत्वमेवेति।

अथ विधिर्निरूप्यते—प्रयत्नजनकचिकीर्षाजनकज्ञानविषयो विधिः। तत्प्रतिपादको लिङादिर्वा। कृत्यसाध्ये प्रवृत्त्यदर्शनात् कृतिसाध्ये प्रवृत्तिदर्शनात् कृतिसाध्यताज्ञानं प्रवर्तकम्। न च विषभक्षणादौ प्रवृत्तिप्रसङ्गः इष्टसाधनतालिङ्गककृतिसाध्यताज्ञानस्य काम्यस्थले, विहितकालशुचिजीवित्वनिमित्तज्ञानजन्यस्य नित्यनैमित्तिकस्थले, प्रवर्तकत्वात्। न चाऽननुगमः। स्वविशेषणवत्ताप्रतिसन्धानजन्यत्वस्यानुगतत्वात् इति गुरवः। तन्न। लाघवेन कृतिसाध्येष्टसाधनताज्ञानस्यैव चिकीर्षाद्वारा प्रयत्नजनकत्वात्। न च नित्ये इष्टसाधनत्वाभावादप्रवृत्तिप्रसङ्गः। तत्रापि प्रत्यवायपरिहारस्य पापक्षयस्य च फलत्वकल्पनात्। तस्मात्कृतिसाध्येष्टसाधनत्वमेव लिङाद्यर्थः।

---

संस्कारतदभावावेव शुद्ध्यशुद्धी इति प्राभाकरभाषितञ्च निरस्तम्। क्लृप्तेनादृष्टविशेषेणैवोपपत्तौ अर्थान्तरप्रार्थनावैयर्थ्यात्। इति प्राहुः।

(६३) "स्वत्वमपि पदार्थान्तरम्। यथेष्टविनियोगयोग्यत्वं तदिति चेत्, कोऽसौ विनियोगः। भक्षणादिकमिति चेत्, न, परकीयेऽप्यन्नादौ तत्सम्भवात्। शास्त्रानिषिद्धं तथेति चेत्, किं तच्छास्त्रम्। 'परस्वं नाददीते'त्यादिकमिति चेत्, स्वत्वाप्रतीतौ कथं तत्प्रवृत्तिः। तस्मात् स्वत्वमतिरिक्तमेव।" इति **पदार्थतत्त्वनिरूपणे** शिरोमणिभट्टाचार्य्याः।

"स्वत्वं न यथेष्टविनियोगविषयत्वं स्वं नियुज्यते न तु विनियोगात् स्वं भवति, विनियोगात् पूर्वं साधारण्यापत्तेः। विनियोगाविषये स्वेऽप्यस्वत्वापत्तेश्च। किन्तु यद्व्यतिरेकेण यथेष्टविनियोगासम्भवनिश्चयः शास्त्राविरुद्धतदुपायविषयत्वरूपं यथेष्टविनियोगयोग्यत्वं स्वत्वम्।" इति **न्यायलीलावतीप्रकाशे** वर्द्धमानोपाध्यायाः।

"आगमान्तरानन्तरितार्जकागमविषयत्वमेव स्वत्वमनुगतम्। आगमश्च धनार्जनहेतुः क्रिया प्रतिग्रहादि।" इति **न्यायलीलावतीकण्ठाभरणे** शङ्करमिश्राः।

"वेदसिद्धयद्विनियोगप्रयोजकक्रियाविषयतामारभ्य वेदसिद्धयद्विनियोगप्रतिबन्धकक्रियाविषयत्वाभावो यावद् यत्र तावत् तस्य स्वत्वमिति लक्षणं पर्य्यवस्यति।" इति **सेतौ** पद्मनाभमिश्राः।

ननु 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यत्र लिङा स्वर्गसाधनकार्यं प्रतीयते यागस्याशुतरविनाशिनः कालान्तरभाविस्वर्गसाधनत्वायोगात् तद्योग्यं स्थायिकार्यमपूर्वमेव लिङाद्यर्थः। कार्यं कृतिसाध्यम्। कृतेः सविषयत्वाद्विषयाकाङ्क्षायां यागो विषयत्वेनान्वेति, 'कस्य कार्यम्' इति नियोज्याकाङ्क्षायां स्वर्गकामपदं नियोज्यपरतयाऽन्वेति। कार्यबोद्धा नियोज्यः। तेन 'ज्योतिष्टोमनामकयागविषयं स्वर्गकामस्य कार्यम्' इति वाक्यार्थः सम्पद्यते। वैदिकलिङ्त्वात् 'यावज्जीवमग्निहोत्रं जुहुयात्' इति नित्यवाक्येऽप्यपूर्वमेव वाच्यं कल्प्यते। 'आरोग्यकामो भेषजपानं कुर्यात्' इत्यादि लौकिकलिङः क्रियाकार्य्ये लक्षणा इति चेत्, न, योगस्याप्ययोग्यतानिश्चयाभावेन साधनतया प्रतीत्यनन्तरं निर्वाहार्थम् अवान्तरव्यापारतयाऽपूर्वकल्पनात्। कीर्तनादिना नाशश्रुतेर्न यागध्वंसो व्यापारः। लोकव्युत्पत्तिबलात् क्रियायामेव कृतिसाध्येष्टसाधनत्वं लिङा बोध्यत इति लिङ्त्वेन विध्यर्थकत्वम्। आख्यातत्वेन यत्नार्थकत्वम्। 'पचति' 'पाकं करोती'ति विवरणदर्शनात्, 'किं करोती'ति प्रश्ने 'पचती'त्युत्तराच्चाख्यातस्य प्रयत्नार्थकत्वनिश्चयात्।

रथो गच्छतीत्यादौ अनुकूलव्यापारे लक्षणा, देवदत्तः पचति, देवदत्तेन पच्यते तण्डुलः, इत्यादौ कर्तृकर्मणोर्नाख्यातार्थत्वम्। किं तु तद्गतैकत्वादीनामेव। तयोराक्षेपादेव लाभः।

प्रजयतीत्यादौ धातोरेव प्रकर्षे शक्तिः। उपसर्गाणां द्योतकत्वमेव, न तु तत्र शक्तिरस्ति (६४)

पदार्थज्ञानस्य परमप्रयोजनं मोक्षः। तथा हि 'आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य.' इति श्रुत्या श्रवणादीनां तत्त्वसा-

(६४) इदमत्राभिसंहितम्। प्रकर्षादेरुपसर्गवाच्यत्वे तत्राख्यातार्थभावनान्वयो न स्यात्, प्रकृत्यार्थान्वितस्वार्थान्वयबोधकत्वात् प्रत्ययानाम्।

ननु नास्ति सार्थकत्वञ्चेदुपसर्गाणां 'सुगतिर्ब्राह्मण' इत्यादौ 'सु'शब्देन कथं बहुव्रीहिरिति चेत्, न, द्योतकत्वेऽपि तस्य तत्र साधुत्वादिति केचित्। नव्यास्तु उपसर्गाणां वाचकत्वे अर्थवदित्यादिनैव प्रातिपदिकसंज्ञायां सिद्धायां निपातस्यानर्थकस्येत्यादेरनुशासनान्तरस्य विभक्तिविधायकस्यानर्थक्यप्रसङ्गः। तथा च तदनुपत्तिरित्यनर्थकस्य चेत्यभिसन्धानं तेषां द्योतकत्वे बीजमित्याहुः।

न्नसाध्यत्वात्। 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति साधनान्तरनिषेधाच्च।

ननु 'तत्प्राप्तिहेतु विज्ञानं कर्म चोक्तं महामुने' इति कर्मणोऽपि मोक्ष-साधनत्वश्रवणात् ज्ञानकर्मणोः समुच्चय (६६) इति चेत्, न, 'नित्यनै-मित्तिकैरेव कुर्वाणो दुरितक्षयम्। ज्ञानं च विमलीकुर्वन् अभ्यासेन च पाचयेत्। अभ्यासात् पक्वविज्ञानं कैवल्यं लभते नरः'। इत्यादिना कर्मणो ज्ञानसाधनत्वप्रतिपादनात्, ज्ञानद्वारैव कर्म मोक्षसाधनम्, न साक्षात् (६७) तस्मात् पदार्थज्ञानस्य मोक्षः परमप्रयोजनम् इत्येव रमणीयमिति।

---

गदाधरभट्टाचार्य्यैरपि 'मुक्तिवादे'—

"निर्विशेषणदुःखप्रागभावस्य संसारदशासाधारणतया स्वसमानाधिकरणदुः-खासमानकालीनध्वंसविशिष्ट एवासौ मोक्षरूपो वाच्यः, तादृशश्चाप्रसिद्धः, मुक्तस्य दुःखानुत्पत्त्या मुक्तिदशायां तत्प्रागभावासत्त्वात्, अनागतस्यैव प्रागभावप्रतियो-गित्वात्।" इत्यादिदूषणैरपाकृतं निरुक्तं प्राभाकरमतम्।

(६६) वस्तुतो ज्ञानकर्म्मणोः समुच्चयस्य न मोक्षसाधनत्वम्, अननुगतानां ज्ञानकर्म्मविशेषाणामनुगतमोक्षं प्रति हेतुत्वासम्भवात्। तृणारणिमणिन्यायेन वैजात्यकल्पनमिव मोक्षे चाभावरूपे जातिविशेषकल्पनमप्यसम्भवि। न च प्रति-योगिनि दुःखे दुरिते वा जातिविशेषान् कल्पयित्वा तदवच्छिन्नप्रतियोगिनां स्वाश्रय-प्रतियोगिकत्वसम्भवेन तेषामेव वा जन्यतावच्छेदकत्वमुपगम्य व्यभिचारः शक्यते वारयितुं गोवधादिजन्यतावच्छेदकजातिभिः सङ्करप्रसङ्गेन तादृशजातिकल्पनानव-काशात्। न च गोवधादिजन्यतावच्छेदकजातीनां नानात्वोपगमान्न सङ्करप्रसङ्ग इति साम्प्रतम्, तासां नानात्वमुत तत्त्वज्ञानादिनाश्यतावच्छेदकजातीनामित्यत्र विनिगमकस्य दुर्लभत्वात्।

(६७) अथ काशीमधिकृत्य—

"अस्मिन् मृतास्तनुभृतः पदमाप्नुवन्ति
मोक्षाख्यमेव मनसाऽपि न संशयोऽत्र॥"

इत्यादिवचनशतोपदेशात् काशीमरणस्याऽपि साक्षान्मोक्षोपायताश्रवणेन कथं ग्रन्थोऽयं सङ्गच्छतामिति चेत्, काशीमरणस्थलेऽपि विश्वेश्वरोपदेशवशेन मानसात्मके तत्त्वज्ञाने जायमान एव मोक्षः सम्पद्यते, न तु सद्यः। अत एव—"अत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे येनासावमृतीभूत्वा मोक्षीभवतीति जाबालश्रुतिः (१।१) "वाराणस्यां महादेवात् ज्ञानं लब्ध्वा विमु-

च्यते ।" इत्यादिपौराणिकवचनान्यपि तत्र तत्रोपलभ्यन्ते । तदुक्तं गदाधरभट्टाचार्य्यैरपि मुक्तिवादे—"मृतशरीरावच्छेदेन ज्ञानोत्पत्त्यसम्भवेन काशीमरणाद्युत्तरं शरीरान्तरपरिग्रहोऽपि कल्प्यते, अनन्यगतिकत्वात् । ...... न च मुमूर्षुतादशायां तारकोपदेशे तच्छरीरावच्छेदेनैवात्मतत्त्वसाक्षात्कारसम्भवात् किमर्थं शरीरान्तरस्वीकार इति वाच्यम् , तच्छरीरावच्छेदेन तारकमन्त्रोपदेशादात्मतत्त्वज्ञानस्वीकारे काशीमरणहेतुत्वानुपपत्तेः । यदि च काशीमरणकारणताबोधकवाक्यानां तदानीमावश्यकस्य तारकोपदेशस्य हेतुतायामेव तात्पर्य्यम् , अन्यथा एकेनापरस्यान्यथासिद्धेर्दुष्परिहारत्वादित्युच्यते, तदा तच्छरीरावच्छेदेनापि तत्त्वज्ञानसम्भवो बोध्यः।"

एतन्मतद्वयमपि वीरमित्रोदये तीर्थप्रकाशे प्रपञ्चितम् । "ननु चाण्डालादीनामनधिकारिणां कथमुपदेशः कथं वा ततोऽपवर्ग" इत्याशङ्क्य समाहितं तत्र मित्रमिश्रैः—"तपःप्रभावेण विश्वामित्रदेह इव श्रीविश्वनाथानुग्रहमहिम्ना तत्रैव द्विजत्वसम्भवात् ।......अत एव काशीखण्डे—

"दीक्षितो वा दिवाकीर्त्तिः पण्डितो वाप्यपण्डितः ।
तुल्यास्ते मोक्षदीक्षायां सम्प्राप्य मणिकर्णिकाम् ॥"

द्वितीयञ्च मतमेवं प्रदर्शितम्—"काशीमरणोत्तरं विशिष्टशरीरपरिग्रहेण ब्रह्मज्ञानान्मुक्तिः । न हि काशीमरणं साक्षात् तद्धेतुः, किन्तु तत्त्वज्ञानप्रतिबन्धकाधर्म्मविनाशेन तत्त्वज्ञानमुत्पाद्य ।...... अत एव चाण्डालादीनामधिकारे न कष्टकल्पनापि प्रागुक्तेत्यवधेयम् ।"—(३१६-१७ पृ०]

विचारविस्तरस्तु तत्रैव जिज्ञासुभिर्द्रष्टव्यः ।

ननु काशीमरणस्थले एवं समाधानसम्भवेऽपि प्रयागमधिकृत्य—

"समुद्रपत्न्योर्जलसन्निपाते पूतात्मनामत्र किलाभिषेकात् ।
तत्त्वावबोधेन विनापि भूयस्तनुत्यजां नास्ति शरीरबन्धः ॥" (रघु०,१३।५८)

इति सर्वज्ञप्रायमहाकविकालिदासकाव्यात् , "ब्रह्मज्ञानेन मुच्यन्ते प्रयागमरणेन वा" "वाराणस्यां विमुच्यन्ते तारकज्ञानभाविता । विना ज्ञानं प्रयागेऽस्मिन् मुच्यन्ते सर्वजन्तवः ॥" इत्यार्षवचनाच्च विनैवात्मसाक्षात्कारं प्रयागमरणे मोक्षो भवतीत्यवगमेन 'ज्ञानद्वारैव कर्म्म मोक्षसाधनम्, न साक्षा'दिति दीपिकाकारोक्तिः पुनरसङ्गतैव इति चेन्न, विना ज्ञानं मिथ्याज्ञाननिवृत्तेरसम्भवेन "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इति श्रुतिप्रामाण्यात् प्रयागमरणेऽपि तत्त्वज्ञानद्वारैव मुक्तिरिति कल्पनीयत्वात् । न च प्रागुक्तप्रमाणवचनानां का गतिरिति चेत्, न हि काव्यस्य पुराणवचनस्य वाऽन्यथात्वभिया श्रुतेरन्यथात्वं वर्णयितुमुचितम् । इति सर्वमवदातम् ।

कणादन्यायमतयोर्बालव्युत्पत्तिसिद्धये ॥
अन्नम्भट्टेन विदुषा रचितस्तर्कसंग्रहः ॥७०॥

इति श्रीमदन्नम्भट्टोपाध्यायविरचिता तर्कसंग्रहदीपिका समाप्ता* ।

## न्यायबोधिनी

काणादेति । कणादस्येदं काणादम् । काणादन्यायमतेति द्वन्द्वगर्भकर्मधारयः । कणादप्रोक्तगौतमप्रोक्तमतयोरिति यावत् । काणादन्यायाभिन्नमतद्वयविषयकबालसमवेताभिन्नव्युत्पत्तिसिद्धप्रयोजकान्नम्भट्टविद्वन्निष्ठभूतकालीनकृतिविषयाभिन्नस्तर्कसंग्रहाख्यग्रन्थ इत्यन्वयबोधः ।

कृष्णावलम्बिनो गाः पूषो गोवर्धनस्तमभ्यर्चन् ॥
विपुलाभीरसभाजनजनितबुधेन्द्रस्तवाभिरचनाभिः ॥ १ ॥

इति श्रीगोवर्द्धनकृता न्यायबोधिनी समाप्ता ।

---

यत् सन्दर्भशतानुशीलनफलं लभ्येत भूरिश्रमै
स्तद् वैदुष्यममुष्य भावि विवृतिग्रन्थस्य सन्दर्शनात् ।
दिङ्मात्रं खलु दर्शितं प्रचलतां नानानयानां मया
तत्तन्मूलनिबन्धदृष्टिषु यथा स्यादाशु कौतूहलम् ॥१॥

प्रमाद् वाऽप्यज्ञानाद् स्खलितमिह यद् यत् सहृदयै
स्तदेतत् क्षन्तव्यं नियतकरुणैकव्रतपरैः ।
मनागप्येषा चेन्मनसि ननु कस्यापि मुदितं
विधत्ते तच्छ्रीमद्गुरुचरणसंसेवनफलम् ॥२॥

सार्द्धत्रिवर्षवयसः परिपूरणात् प्राक्
प्रोद्भासितः समुदितैः प्रतिभाविशेषैः ।
क्रीडाशतेन सृजति स्म समस्तलोक-
स्वान्तेषु विस्मयरसं प्रियदर्शनो यः ॥३॥

---

* इति श्रीमदद्वैतविद्याचार्य्य—श्रीमद्राघवसोमयाजिकुलावतंसश्रीमत्तिरुमलाचार्य्यस्य सूनुनाऽन्नम्भट्टेन कृता स्वकृततर्कसंग्रहस्य दीपिका सम्पूर्णा ।

पुरारिपुरमण्डपे स च निशम्य गीताकथां
ध्रुवव्रत इति श्रुतः शिशुसुतश्चिरं प्रस्थितः ।
तदीयसुखदुःखदस्मृतिविशेषसम्पूर्त्तये
व्यधायि विवृतिर्नवा ध्रुवपदाऽभिधेया मया ॥४॥

बभूव मधुसूदनः परमहंसचूडामणिः
प्रभूतसुनिबन्धकृन्निखिलशास्त्रपारङ्गमः ।
तदग्रजकुलोद्भवः स हरचन्दनामा कृती
यदीयमभवत् सुतद्वयमतीव धर्म्मव्रतम् ॥५॥

तत्र श्रीद्वारिकानाथो न्यायपञ्चाननः सुधीः ।
ज्यायानध्यापयामास न्यायान् व्याकरणानि च ॥६॥

कनीयान् मथुरानाथो विद्यारत्नोपनामकः ।
ज्योतिषे कर्म्मकाण्डे च परं प्रावीण्यमाप्तवान् ॥७॥

तदात्मजनुषा श्रिया हरिहरेण काशीपुरे
शशीपुवसुशीतगुप्रमितशाकसम्वत्सरे ।
प्रयागमनिगच्छता विपुलकुम्भयोगोत्सवे
निबन्धनमतिश्रमैरिदमनायि सम्पूर्णताम् ॥८॥

दुग्धाम्भोनिधिमध्यभासितमणिद्वीपे चतुर्विंशति
प्राचीरैः परिवेष्टिते शुभचतुर्द्वारैरभिद्योतिते ।
श्रीचिन्तामणिमण्डपे स्वमहसा विभ्राजमानाऽनिशं
देवी काचिदचिन्तनीयचरिता प्रीणातु मत्कर्म्मणा ॥९॥

इति वङ्गविषयाऽवयव-कोटालीपाड़ाऽभिजन काश्यप श्रीमथुरानाथाऽऽत्मज-
श्रीहरिहरशास्त्रिकृता ध्रुवपदा सम्पूर्णा ।

# तर्कसंग्रह का हिन्दी-भाषानुवाद



हृदयमें विश्वेश्वरको विशेष रूपसे स्थापित कर और विद्यागुरुओंको प्रणाम कर बालकोंको अनायास बोधके लिए तर्कसंग्रह नामक ग्रन्थ बनाया जाता है।

द्रव्य, गुण, कर्म, सामान्य, विशेष, समवाय, अभाव ये सात पदार्थ हैं ॥१॥

उन पदार्थोंमें पृथिवी, जल, तेज, वायु, आकाश, काल, दिशा, आत्मा और मन ये ही नव द्रव्य है ॥२॥

रूपसे लेकर संस्कार तक मूलोक्त चौबीस प्रकारके गुण हैं ॥३॥

उत्क्षेपण ( ऊपर फेंकना ) अपक्षेपण ( नीचे फेंकना ) आकुञ्चन ( समेटना ) प्रसारण ( फैलाना ) गमन (चलना) ये पांच कर्म हैं ॥४॥

पर ( अधिक स्थानमें रहनेवाला ) और अपर ( कम स्थानमें रहने वाला ) ये दो प्रकारके सामान्य हैं ॥५॥

विशेष केवल नित्यद्रव्योंमें रहता है और अनन्त है ॥६॥

समवाय एक ही है ॥७॥

अभाव चार प्रकारका होता है—प्रागभाव, प्रध्वंसाभाव, अन्योन्याभाव और अत्यन्ताभाव ॥८॥

नव द्रव्योंमेंसे जिसमें गन्ध हो, वह पृथिवी है। वह दो प्रकारकी है—नित्य और अनित्य। परमाणु-रूप पृथिवी नित्य है और कार्य-रूप पृथिवी अनित्य है। कार्यरूप पृथिवी फिर तीन प्रकार की है, शरीर, इन्द्रिय और विषय। हम लोगोंका शरीर पार्थिव अर्थात् पृथिवी-रूप उपादानसे बना है। जिससे गन्धकी अनुभूति होती है वह नाकके अगले भागपर रहनेवाला घ्राणेन्द्रिय ही इन्द्रिय-रूप पृथिवी है। मिट्टी पत्थर आदि विषय-रूप पृथिवी कहलाती है ॥९॥

जिसमें शीतल स्पर्श है, वह जल है। वह जल दो प्रकारका है—नित्य और अनित्य। परमाणु-रूप जल नित्य है, कार्य्य रूप जल अनित्य

है। शरीर, इन्द्रिय और विषय भेदसे कार्य्य-रूप जल तीन किसम का है। जलीय शरीर वरुण लोकमें है। जिससे मधुरादि रसका अनुभव होता है वह जिह्वाके अग्रभागपर रहनेवाली रसना जलीय इन्द्रिय है। नदी समुद्र आदि विषय-रूप जल है ॥१०॥

जिस वस्तुमें उष्णस्पर्श हो, वह तेज है। तेज भी दो प्रकारका है—एक नित्य दूसरा अनित्य। परमाणु-रूप तेज नित्य और कार्य्य-रूप तेज अनित्य है। कार्य्य-रूप तेज तीन प्रकारका है—शरीर, इन्द्रिय और विषय। सूर्य्य लोकमें तैजस शरीर है। जिससे रूपका प्रत्यक्ष होता है, वह नेत्रके अन्दरकी कृष्णताराके अगले भागमें रहनेवाला चक्षु तैजस इन्द्रिय है। भौम दिव्य औदर्य्य और आकरजके भेदसे तैजस विषय चार प्रकार होता है। अग्नि आदि भौम तेज है। जिसका अप् अर्थात् जल ही इन्धन है, ऐसा विजली आदि दिव्य तेज है। खाना पकानेवाला पेटके भीतरका तेज ही औदर्य्य तेज है और खानसे निकला हुआ सुवर्णादि आकरज तेज है ॥११॥

जिसमें रूप न हो वल्कि स्पर्श हो वह वायु है। वायु भी दो प्रकारका है—नित्य और अनित्य। परमाणु-रूप वायु नित्य और कार्य्य-रूप वायु अनित्य है। कार्य्य-रूप वायु तीन प्रकार है, शरीर इन्द्रिय और विषय। वायवीय शरीर वायुलोकमें है। जिससे स्पर्शका प्रत्यक्ष होता है वह सारे शरीरमें वर्तमान त्वचा वायवीय इन्द्रिय है। वृक्षादियों के कम्पनका हेतु वायवीय विषय है। शरीरके अन्दर वर्त्तमान वायु प्राण कहलाता है। वह एक होकर भी स्थान-रूप उपाधि भेदसे प्राण, अपान, समान, उदान और व्यान यह पाँच नामोंसे परिचित होता है ॥१२॥

शब्द जिसका गुण है उसका नाम आकाश। वह एक, सर्वव्यापी और नित्य है ॥१३॥

अतीत आदि व्यवहारका कारण जो द्रव्य है, वह काल कहलाता है। वह भी एक सर्वव्यापी और नित्य है ॥१४॥

पूरव पच्छिम इत्यादि व्यवहारका कारण जो द्रव्य है उसका नाम दिशा है। वह एक है, नित्य है और सर्वव्यापक है ॥१५॥

जिसमें ज्ञान रहता है वह आत्मा कहलाता है। वह दो प्रकारका है—

एक जीव दूसरा परमात्मा। परमात्मा ही ईश्वर कहलाता है। वह सर्वज्ञ और एक है। जीव प्रति शरीरमें भिन्न है, परन्तु व्यापक और नित्य है ॥१६॥

जिस इन्द्रियसे सुखदुःखादिकी उपलब्धि होती है, उसका नाम मन है। एक एक जीवात्माके एक एक मन है, इसलिये मन अनन्त है। मन परमाणु और नित्य है ॥ १७ ॥

जिस गुणका केवल नेत्रसे प्रत्यक्ष होता है, वह रूप है। शुक्ल, नील, पीत, रक्त, हरित, कपिश, चित्र इन भेदोंसे रूपके सात प्रकार हैं। रूप पृथ्वी, जल और तेजमें रहता है। इन तीनमें से पृथ्वीमें सात प्रकार का रूप है। जलमें केवल अभास्वर शुक्ल रूप रहता है। तेजमें भास्वर अर्थात् परप्रकाशक शुक्ल रूप है ॥ १८ ॥

जिह्वासे जिस गुणका प्रत्यक्ष होता है, वह रस है। मधुर, अम्ल, लवण, कटु, कषाय, तिक्त भेदसे रस छ प्रकारका है। पृथ्वी और जल रसका आधार है। पृथ्वीमें छओ प्रकारका रस है। जलमें केवल मधुर रस रहता है ॥ १९ ॥

घ्राणेन्द्रियसे जिस गुणकी उपलब्धि होती है, उसका नाम गन्ध है। गन्ध दो प्रकारका है—सुगन्ध और दुर्गन्ध। गन्ध केवल पृथ्वीमें ही रहता है ॥ २० ॥

केवल त्वगिन्द्रियसे जिस गुणका प्रत्यक्ष होता है, उसे स्पर्श कहते हैं। स्पर्श तीन प्रकारका है—शीत (ठंढा) उष्ण (गर्म) और अनुष्णाशीत (न ठंढा न गर्म)। स्पर्श—पृथ्वी, जल, तेज और पवनमें रहता है। इनमें शीतस्पर्श जलमें, उष्णस्पर्श तेजमें और अनुष्णाशीत स्पर्श पृथ्वी और पवनमें रहता है ॥ २१ ॥

रूप, रस, गन्ध और स्पर्श यह चार गुण पृथ्वीमें पाकज अर्थात् तेजके संयोग से उत्पन्न होते हैं और अनित्य हैं। अन्यत्र अर्थात् जल, तेज और वायुमें जो रूपादि है, वह अपाकज है। जलादिमें रहने-वाले रूप रस स्पर्श नित्य और अनित्य दोनों हैं। नित्य अर्थात् परमाणुमें रहनेवाले रूपादि नित्य और अनित्य घटपटादिमें रहनेवाले वे अनित्य हैं ॥ २२ ॥

एक दो इत्यादि व्यवहारका कारण संख्या है। वह नव द्रव्योंमें

रहती है। यह संख्या एक से लेकर परार्द्ध तक है। एकत्व संख्या नित्य और अनित्य दो प्रकारकी होती है। परमाणु आकाशादि नित्य पदार्थमें रहनेवाला एकत्व नित्य और घटपटादि अनित्य पदार्थमें रहनेवाला एकत्व अनित्य है, परन्तु द्वित्वादिसंख्या सब स्थानोंमें अनित्य ही है ॥२३॥

नापनेके व्यवहारका जो मुख्य कारण है, उसे परिमाण कहा जाता है। यह नव द्रव्योंमें रहता है। परिमाण चार प्रकारका है—अणुत्व, महत्त्व, दीर्घत्व और ह्रस्वत्व ॥२४॥

यह चीज इससे अलग है—इस व्यवहारका असाधारण कारण पृथक्त्व है। यह सब द्रव्योंमें रहता है ॥२५॥

ये दो पदार्थ मिले हुए हैं—इस व्यवहारका असाधारण हेतु संयोग है। संयोग भी सब द्रव्योंमें रहता है ॥२६॥

संयोगका नाश करनेवाला गुण विभाग है। विभाग भी सब द्रव्यों में रहता है ॥२७॥

पर और अपर व्यवहारके असाधारण कारण परत्व और अपरत्व हैं। परत्वापरत्व पृथ्वी, जल, तेज, वायु और मनमें रहते हैं। यह दो प्रकार के हैं। दिक्कृत और कालकृत। दूरस्थ वस्तुमें दिकृत परत्व और समीपस्थ वस्तुमें दिकृत अपरत्व है। ज्येष्ठमें कालकृत परत्व और कनिष्ठमें कालकृत अपरत्व है ॥२८॥

पहिले गिरनेका जो असमवायिकारण है, उसका नाम गुरुत्व है। यह पृथ्वी और जलमें रहता है ॥२९॥

चूनेका असमवायिकारण द्रवत्व है। यह पृथ्वी, जल और तेजमें रहता है। द्रवत्व दो प्रकारका है—सांसिद्धिक (स्वाभाविक) और नैमित्तिक ( तेज संयोगसे उत्पन्न होनेवाला )। सांसिद्धिक द्रवत्व जलमें और नैमित्तिक द्रवत्व पृथ्वी और तेजमे रहता है। घृतादि पृथिवीमें तथा सुवर्णादि तैजस पदार्थमें नैमित्तिक द्रवत्व है ॥३०॥

पिसी हुई चीज को इकट्ठा करनेवाला जो गुण है, उसका नाम स्नेह है। यह केवल जलहीमें रहता है ॥३१॥

जिस गुणका कर्णेन्द्रियसे प्रत्यक्ष होता है, वह शब्द है। शब्द केवल आकाशमें रहता है। शब्द दो प्रकारका है—ध्वनि और वर्ण। नगाड़ा

आदि बाजोंसे जो शब्द निकलता है, वह ध्वनि, और कण्ठसे उत्पन्न संस्कृतभाषादि-रूप शब्द वर्ण है ॥३२॥

जो गुण सभी व्यवहारका कारण है, उसका नाम बुद्धि है। यह ज्ञान भी कहलाता है। बुद्धि दो प्रकार की है—स्मरण और अनुभव ॥३३॥

जो ज्ञान संस्कारमात्रसे उत्पन्न होता है उसका नाम स्मरण है। उससे भिन्न ज्ञान अनुभव है। वह दो प्रकारका है—यथार्थ और अयथार्थ। वास्तवमें जो पदार्थ जैसा हो उसको वैसा ही समझना यथार्थ अनुभव है। जैसे घड़ेको देखके 'यह घड़ा है' इस प्रकार का ज्ञान। यह ज्ञानही प्रमा कहा जाता है ॥३४॥

जो वस्तु जैसी न हो उसको वैसी समझना अयथार्थ अनुभव है ॥३५॥

यथार्थ अनुभव चार प्रकारका है—प्रत्यक्ष, अनुमिति, उपमिति और शाब्दबोध। उसका करण (असाधारण कारण) भी चार प्रकारका है—प्रत्यक्ष, अनुमान, उपमान और शब्द ॥३६॥

असाधारण कारणको करण कहते हैं ॥३७॥

जो कार्य्यकी उत्पत्तिके पहिले अवश्य हो वह कारण कहलाता है ॥३८॥

जो पदार्थ प्रागभावका प्रतियोगी होता है अर्थात् जिसकी उत्पत्ति होनेवाली है उसका नाम कार्य्य है ॥३९॥

कारण तीन प्रकारका है—समवायि, असमवायि और निमित्त।

जिसमें समवाय सम्बन्धसे रहता हुआ कार्य्य उत्पन्न होता है वह समवायिकारण है। जैसे सूत कपड़ेका समवायि कारण है। और कपड़ा अपने रूपका समवायिकारण है। कार्य्य अथवा कारणके साथ एकही स्थानमें समवाय सम्बन्धसे वर्त्तमान होकरके जो कारण हो वह असमवायिकारण है। जैसे तागोंका रूप कपड़ेके रूपका असमवायि कारण है। समवायि और असमवायि इन दोनों कारणोंसे भिन्न जो कारण हो उसको निमित्तकारण कहते हैं। जैसे तुरी वेमा आदि कपड़ेके निमित्त कारण होते हैं ॥४०॥

इन तीनों कारणोंमें जो असाधारण कारण हो उसीको करण कहा जाता है। प्रत्यक्ष ज्ञानका असाधारण कारण प्रत्यक्ष प्रमाण है। इन्द्रिय और विषयके सन्निकर्ष से जो ज्ञान होता है, उसका नाम प्रत्यक्ष

है। प्रत्यक्ष दो प्रकारका है—निर्विकल्पक और सविकल्पक। जिस ज्ञानमें विशेष्य विशेषण सम्बन्ध विषय न हों वह निर्विकल्पक है। जिस ज्ञानमें विशेष्य विशेषण सम्बन्ध विषय हों वह सविकल्पक है। जैसे 'यह डित्थ है', 'यह ब्राह्मण है', 'यह श्याम है' ॥४१॥

विषय और इन्द्रियका सम्बन्ध प्रत्यक्ष ज्ञानका हेतु है। यह सम्बन्ध छ प्रकारका है। (१) संयोग, (२) संयुक्तसमवाय, (३) संयुक्तसमवेतसमवाय, (४) समवाय, (५) समवेतसमवाय और (६) विशेषणविशेष्यभाव। आँखसे घड़ेके प्रत्यक्ष करनेमें संयोग सन्निकर्ष है। घड़ेके काला लाल इत्यादि रंगके प्रत्यक्ष करनेमें संयुक्तसमवाय सन्निकर्ष होता है। क्योंकि घड़ेमें आँखका संयोग है और घड़ेमें अपना रंग समवाय सम्बन्धसे रहता है। रूपमें रहनेवाली रूपत्व जातिके प्रत्यक्ष करनेमें संयुक्तसमवेतसमवाय सन्निकर्ष है। क्योंकि चक्षुःसंयुक्त घटमें रूप समवाय सम्बन्धसे रहता है और रूपमें भी रूपत्वका समवाय है। कानसे शब्दके प्रत्यक्ष करनेमें समवाय सन्निकर्ष है। क्योंकि कानके छिद्रमें जो आकाश है उसीको कर्णेन्द्रिय कहते हैं। शब्द आकाशका गुण है; गुण और गुणीका सम्बन्ध समवाय होता है। शब्दत्वके प्रत्यक्ष करनेमें समवेतसमवाय सन्निकर्ष होता है। क्योंकि श्रोत्र-समवेत शब्दमें शब्दत्व जाति समवाय सम्बन्धसे रहती है। अभावके साक्षात् करनेमें विशेष्यविशेषणभाव सन्निकर्ष है। क्योंकि भूतल घटवद् है इस स्थलपर चक्षुःसंयुक्त भूतलमें घटाभाव विशेषण होता है। इस प्रकार छ सन्निकर्षोंसे जो ज्ञान होता है वह प्रत्यक्ष कहा जाता है। इसका करण इन्द्रिय है। इससे इन्द्रिय प्रत्यक्ष प्रमाण है यह सिद्ध हुआ ॥४२॥

## अनुमानखण्ड

अनुमितिका करण अनुमान है। परामर्शसे उत्पन्न ज्ञान अनुमिति कहा जाता है। व्याप्तिविशिष्ट हेतु पक्षमें है—इस ज्ञानका नाम परामर्श है। जैसे—'यह पर्वत अग्निसे व्याप्त धूमवाला है'। यह ज्ञान परामर्श कहा जाता है। इस परामर्शसे उत्पन्न हुआ 'पर्व्वत वह्निवाला है,' यह ज्ञान अनुमिति है। जहाँ धूम रहता है वहाँ वह्नि रहता है, यह साथ रहनेका

नियम व्याप्ति कहा जाता है। व्याप्य धूमका पर्वतादिमें रहना ही पक्षधर्म्मता है ॥४३॥

अनुमान दो प्रकारका है—स्वार्थ और परार्थ। अपनी अनुमिति का जो हेतु है उसका नाम स्वार्थानुमान। जैसे—स्वयं वार-वार देखने से जहाँ धूम रहता है वहाँ वह्नि रहता है इस प्रकार से महानसादिमें व्याप्ति निश्चय कर मनुष्य पर्वतके पास गया, वहाँ अग्नि है या नहीं ऐसा संशय कर पर्वतमें धूम देखकर जहाँ धूम रहता है वहाँ वह्नि रहता है इस व्याप्तिका स्मरण करता है, इसके बाद 'वह्निव्याप्य धूमवाला यह पर्वत है' ऐसे ज्ञानकी उत्पत्ति होती है। यही ज्ञान लिङ्ग परामर्श है। उससे 'पर्वत अग्निवाला है' यह ज्ञान उत्पन्न होता है। यही स्वार्थानुमान है।

स्वयं धूमसे वह्निका अनुमान करके दूसरे पुरुषको समझानेके लिये जो पञ्चावयव वाक्यका प्रयोग किया जाता है, वह परार्थानुमान है। जैसे—'पर्वत वह्नियुक्त है।' उसमें 'धूम देख पड़ता है'। 'जो जो धूमयुक्त है वह अग्नियुक्त होता है, जैसे रसोईघर'। 'यह पर्वत भी वैसा है' (धूमयुक्त है) 'इसलिये वैसा है' (अग्नियुक्त है) इस प्रकार प्रतिपादित लिङ्गसे दूसरा पुरुष भी पर्वतमें वह्निका अनुमान कर लेता है।

प्रतिज्ञा, हेतु, उदाहरण, उपनय और निगमन, ये पाँच अवयव हैं। 'पर्वत अग्नियुक्त है' इसका नाम प्रतिज्ञा है। 'धूमयुक्त होनेसे' यह हेतु है। 'जो जो धूमयुक्त होता है वह वह वह्नियुक्त होता है', यथा पाकशाला; यह उदाहरण है। 'यह भी वैसा ही है', इसका नाम उपनय है। 'इसलिये वैसा है'–( अग्नियुक्त ) यह निगमन है ॥४४॥

स्वार्थानुमिति और परार्थानुमिति इन दोनोंका लिङ्ग-परामर्श करण है। इसलिये लिङ्गपरामर्श ही अनुमानप्रमाण है ॥४५॥

लिङ्ग तीन प्रकारका है—अन्वयव्यतिरेकि, केवलान्वयि, केवलव्यतिरेकि। जिस लिङ्गमें अन्वय और व्यतिरेक दोनों व्याप्ति हों उसका नाम अन्वयव्यतिरेकि है। जैसे वह्नि सिद्ध करनेमें धूमहेतु अन्वयव्यतिरेकि है। जहाँ धूम है वहाँ वह्नि है जैसे पाकशाला में यह अन्वयव्याप्ति हुई। जहाँ वह्नि नहीं है वहाँ धूम भी नहीं है यथा जलाशय में यह व्यतिरेकव्याप्ति हुई। जिस लिङ्गमें केवल अन्वयव्याप्ति हो वह केवलान्वयि है। जैसे—'घट

अभिधेय है' क्योंकि इसमें प्रमेयत्व रहता है। दृष्टान्त पट। इस स्थलमें प्रमेयत्व और अभिधेयत्वकी व्यतिरेक-व्याप्ति नहीं है। क्योंकि सभी पदार्थोंमें अभिधेयत्व और प्रमेयत्व हैं। जिसमें केवल व्यतिरेक-व्याप्ति हो वह केवलव्यतिरेकि लिङ्ग है। जैसे—पृथिवी इतर पदार्थोंसे अलग है क्योंकि इसमें गन्ध रहता है। जो इतर पदार्थसे अलग नहीं है उसमें गन्ध नहीं है, जैसे—जल, यह पृथिवी वैसी नहीं है इससे यहवैसी नहीं है। यहाँ जो गन्ध वाला है वह इतर पदार्थोंसे भिन्न है ऐसा अन्वय-दृष्टान्त नहीं है, क्योंकि पृथ्वीमात्र ही पक्ष है ॥४६॥

जिसमें साध्यका सन्देह हो वह पक्ष है। जैसे धूम हेतु होने पर पर्वत। जिसमें साध्यका निश्चय हो उसका नाम सपक्ष है, जैसे—उसी स्थलमे पाकशाला। जिसमे साध्याभावका निश्चय हो वह विपक्ष है। जैसे उसी स्थानमें तालाब ॥४७॥

(जो वास्तवमें हेतु न होकर हेतुके समान प्रतीत होता है, उसका नाम हेत्वाभास है) हेत्वाभास पाँच प्रकारका है—सव्यभिचार, विरुद्ध, सत्प्रतिपक्ष, असिद्ध और बाधित। सव्यभिचारको अनैकान्तिक कहते हैं। वह तीन प्रकारका है, साधारण असाधारण और अनुपसंहारी। इन में उस हेतुको जो हेतु, जहाँ साध्य नहीं है वहाँ वर्त्तमान हो साधारण कहते हैं। जैसे पर्वतमे वह्नि है, क्योंकि इसमें प्रमेयत्व रहता है। यहाँ प्रमेयत्व वह्न्यभावाधिकरण जलाशयमें भी रहता है इस लिये यह हेतु साधारण अनैकान्तिक हुआ। जो हेतु सब सपक्ष और विपक्षमें न हो केवल पक्षमात्रमें हो वह असाधारण है। जैसे—'शब्द नित्य है'। क्योंकि इसमे शब्दत्व रहता है'। शब्दत्व सभी नित्य और अनित्य पदार्थोंमें वर्तमान न होकर केवल शब्दमें ही रहता है।

जिससे अन्वय और व्यतिरेक दृष्टान्त न हो, वह अनुपसंहारी है। जैसे—सभी पदार्थ अनित्य हैं, क्योंकि सब पदार्थोंमें प्रमेयत्व रहता है'। यहाँ सभी पदार्थ पक्षके अन्तर्भूत हैं इसलिये दृष्टान्त नहीं है।

जो हेतु साध्याभावसे व्याप्त है उसका नाम विरुद्ध है। जैसे—'शब्द नित्य है, क्योंकि उसमें कृतकत्व है'। कृतकत्व हेतु नित्यत्वाभाव अनित्यत्वसे व्याप्त है।

जिस हेतुके साध्याभावका सिद्ध करनेवाला दूसरा हेतु हो उसका नाम सत्प्रतिपक्ष है। जैसे—'शब्द नित्य है, क्योंकि उसमें श्रवणेन्द्रिय-ग्राह्यत्व रहता है', दृष्टान्त—शब्दत्वजाति। 'शब्द अनित्य है, क्योंकि उसमें कार्य्यत्व रहता है', दृष्टान्त—घट।

असिद्ध तीन प्रकारका है—आश्रयासिद्ध, स्वरूपासिद्ध और व्याप्यत्वासिद्ध।

आश्रयासिद्धका उदाहरण—'आकाश-कमल सुगन्धवाला है, क्योंकि उसमें कमलत्व है'। जैसे—तालावका कमल। यहाँ आकाश-कमल आश्रय है। किन्तु वह होता ही नहीं।

स्वरूपासिद्धका उदाहरण—'शब्द गुण है, क्योंकि उसमें चाक्षुषत्व है', जैसे—रूप। यहाँ शब्दमें चाक्षुषत्व ( आँखसे देखा जाना ) नहीं है, क्योंकि शब्द श्रवणेन्द्रियग्राह्य है।

जो हेतु उपाधि सहित हो, उसका नाम व्याप्यत्वासिद्ध है। जो साध्यका व्यापक होकर हेतुका अव्यापक हो वह उपाधि है। साध्याधिकरणमें रहनेवाले अभावका जो प्रतियोगी न हो वह साध्य व्यापक है। जो हेत्वधिकरणमें रहनेवाले अत्यन्ताभावका प्रतियोगी होता है वह साधनाव्यापक है। जैसे—पर्वत अग्निवाला होनेसे धूमवाला है। यहाँ आर्द्रेन्धनसंयोग उपाधि होता है। क्योंकि जहाँ जहाँ धूम है वहाँ वहाँ आर्द्र इन्धनका संयोग है, इसलिये वह साध्यव्यापक है, और जहाँ जहाँ वह्नि है वहाँ वहाँ आर्द्रेन्धनसंयोग नहीं है, क्योंकि उत्तप्त लोहेके गोलेमें आर्द्रेन्धन नहीं है, इसलिये वह उपाधि साधनका अव्यापक हुआ। इस प्रकारसे साध्यका व्यापक होकर हेतुका अव्यापक होनेसे आर्द्र इन्धनका संयोग उपाधि हुआ, उपाधि सहित होनेसे धूमको साध्य करनेमें वह्नि हेतु व्याप्यत्वासिद्ध है।

जिसको हेतु करनेमें दूसरे प्रमाणसे पक्षमें साध्यका अभाव निश्चित हो, वह बाधित है, जैसे—'वह्नि अनुष्ण है, क्योंकि इसमें द्रव्यत्व रहता है'। यहाँ अनुष्णत्व साध्य है, उसका अभाव उष्णत्व, प्रत्यक्ष प्रमाणसे वह्निमें सिद्ध है। इसलिये यह हेतु बाधित है ॥४८॥

## उपमानखण्ड

उपमितिका करण उपमान है। पद और पदार्थ इन दोनोंका सम्बन्ध ज्ञान ही उपमिति है। उसका करण सादृश्यज्ञान है। जैसे किसी पुरुष ने जो गवय शब्दका अर्थ नहीं जानता, अरण्यमें रहनेवाले किसी मनुष्यसे 'गवय गायके तुल्य होता है' यह सुना और वनमें जाकर उक्त वाक्यार्थ स्मरण करते हुए गायके समान किसी जन्तुको देखा, बाद 'यह गवयशब्दवाच्य है' ऐसी उपमिति उसे होती है ॥४९॥

## शब्दखण्ड

आप्त पुरुषका वाक्य शब्द प्रमाण है। ठीक बात कहनेवाला आप्त है। पदोंका समूह वाक्य है, जैसे—'हाथमें दण्ड लेकर सफेद गायको लाओ।'

शक्तिविशिष्टको पद कहते हैं। 'इस पदसे यह अर्थ समझना चाहिये', ऐसा जो ईश्वरका सङ्केत है, उसका नाम शक्ति है ॥५०॥

आकाङ्क्षा, योग्यता और सन्निधि वाक्यार्थ समझनेमे हेतु हैं। दूसरे पदके न रहनेसे एक पदका अन्वयबोधाजनकत्व ही आकाङ्क्षा है। एक पदार्थमे दूसरे पदार्थका प्रकृत सम्बन्ध रहना योग्यता है। पदोंका विना विलम्ब उच्चारण करना सन्निधि है। आकाङ्क्षादि रहित वाक्य प्रमाण नहीं होता। जैसे—'गाय घोड़ा मनुष्य हाथी' यह कहना प्रमाण नहीं है, क्योंकि इनमें आकाङ्क्षा नहीं है। 'आगसे सींचो' यह वाक्य भी प्रमाण नहीं है, क्योंकि इसमें योग्यता नहीं है। एक एक प्रहरके बाद अलग-अलग कहे हुए 'गाय लाओ' ये पद भी प्रमाण नहीं होते हैं, क्योंकि इनमे सान्निध्य नहीं है ॥५१॥

वाक्य दो प्रकारका होता है—वैदिक और लौकिक। वेद ईश्वरकी उक्ति है, इसलिये वैदिक वाक्य सभी प्रमाण हैं। आप्तके कहे हुये ही लौकिक वाक्य प्रमाण होते हैं॥

इससे अतिरिक्त अप्रमाण हैं।

वाक्यका अर्थ समझनाही शाब्दज्ञान है। उसका करण है शब्द ॥५२॥

शब्दखण्ड समाप्त

अयथार्थ अनुभव तीन प्रकारका है, संशय, विपर्य्यय और तर्क। एक ही विशेष्यमें विरुद्ध अनेक धर्म्मोंका ज्ञान संशय है। जैसे—'यह स्थाणु है या मनुष्य।'

मिथ्याज्ञानका नाम है विपर्य्यय। जैसे—सीपमें 'यह चाँदी है' ऐसा ज्ञान।

व्याप्यके आरोपसे व्यापकका आरोप करना तर्क है। जैसे—यदि आग न हो तो धूँआ न हो ॥५३॥

स्मृति भी दो प्रकारकी है यथार्थ और अयथार्थ। जो यथार्थ ज्ञानसे उत्पन्न हो वह यथार्थ और जो अयथार्थ ज्ञानसे उत्पन्न हो वह अयथार्थ ॥५४॥

जो सबको अनुकूल जान पड़े वह सुख है ॥५५॥

जो बुरा लगे वह दुःख है ॥५६॥

कामनाका नाम इच्छा है ॥५७॥

क्रोधका नाम द्वेष है ॥५८॥

कृति अर्थात् उद्योगका नाम प्रयत्न है ॥५९॥

विहित कर्म्मसे उत्पन्न अदृष्टका नाम धर्म्म ॥६०॥

निषिद्ध कर्म्मजन्य अदृष्टका नाम अधर्म्म ॥६१॥

बुद्धि, सुख, दुःख, इच्छा, द्वेष, प्रयत्न, धर्म्म और अधर्म्म यह आठ आत्माके विशेष गुण हैं। बुद्धि, इच्छा और प्रयत्न दो प्रकारके हैं। नित्य और अनित्य। ईश्वरके बुद्धि इच्छा और प्रयत्न नित्य और जीवके अनित्य है ॥६२॥

संस्कार तीन प्रकारका है। वेग, भावना और स्थितिस्थापक। वेग—पृथ्वी, जल, वायु, तेज और मन, इन पाँचोंमें रहता है। जो अनुभवसे उत्पन्न और स्मरणका कारण है उसका नाम है भावना। यह केवल आत्मामें रहती है।

दूसरी अवस्था को पहुँचाई हुई वस्तुको फिर पूर्व्वावस्थामें लानेवाला संस्कार स्थितिस्थापक है। यह चटाई आदि पार्थिव पदार्थमें रहता है ॥६३॥

चलनरूप क्रिया को कर्म्म कहते हैं। ऊर्ध्व देशमें संयोगका कारण उत्क्षेपण (ऊपर फेंकना) है। निम्नदेशमें संयोगका हेतु अपक्षेपण (नीचे फेंकना) है। शरीरके समीप संयोग होनेका कारण आकुञ्चन (समेटना)

है। और शरीरसे दूर संयोगका कारण प्रसारण (फैलाना) है। इनके अतिरिक्त कर्म्म गमनमें अन्तर्भूत हैं ॥६४॥

नित्य एवं एक होकर अनेक पदार्थोंमें रहनेवाला सामान्य है। सामान्य द्रव्य गुण और कर्म्ममें रहता है।

सबसे अधिक देशमें रहनेवाली जाति है सत्ता। द्रव्यत्वादि जाति सत्तासे न्यून स्थानमें रहती है ॥६५॥

नित्य द्रव्योंमें रहने वाले जो व्यावर्त्तक हैं वे विशेष हैं ॥६६॥

नित्य सम्बन्धका नाम समवाय है। वह अयुतसिद्ध पदार्थमें रहता है।

जिन दोनोंमें एक, अविनष्ट दशा में दूसरेके आधार पर रहता हो वे अयुतसिद्ध कहाते हैं। जैसे—अवयव और अवयवी, गुण और द्रव्य, क्रिया और द्रव्य, जाति और व्यक्ति, विशेष और नित्य द्रव्य ॥६७॥

जिसका आदि न हो और अन्त हो वह प्रागभाव है। जैसे-कार्य्य की उत्पत्तिके पहलेका अभाव। जिसका आदि हो परन्तु अन्त न हो उसका नाम प्रध्वंसाभाव। जैसे—कार्य्यकी उत्पत्तिकेबादका अभाव।

जिसकी प्रतियोगिता संसर्गानवच्छिन्न होती है और भूत भविष्यत् वर्त्तमान इन तीनो कालोंमें रहता है, उसको अत्यन्ताभाव कहते हैं। जैसे—'भूतलमें घडा नहीं है'।

जिसकी प्रतियोगिता तादात्म्यसम्बन्धावच्छिन्ना हो वह अन्योन्याभाव है। जैसे—'घड़ा वस्त्र नहीं है' ॥६८॥

सब पदार्थोंका यथोचित रूपसे उक्त सात पदार्थोंमें ही अन्तर्भाव हो जाता है, इससे सात ही पदार्थ हैं यह सिद्ध हुआ ॥६९॥

कणाद और गौतमके मतमें बालकोंकी व्युत्पत्ति होनेके लिये विद्वान् अन्नंभट्टने तर्कसंग्रह बनाया।

❀ समाप्त ❀

# प्रश्नोत्तरमाला

## तर्कसंग्रहे

प्र० (१)—'तर्कसंग्रह' इत्यत्र कः समासः ? (का० ग० सं० का० १६१६ )

उ० (१)—'तर्कसंग्रह' इत्यत्र षष्ठीतत्पुरुषसमासः । व्यासवाक्यं च 'तर्काणां संग्रह' इत्येवं रूपम् ।

प्र० (२)—पृथिव्याः किं लक्षणम् ?
कतिविधा च सा ? (का० ग० सं० का० १६१७)

उ० (२)—समवायसम्बन्धेन गन्धवत्त्वं पृथिव्या लक्षणम् । नित्याऽनित्यभेदात् सा द्विविधा । उत्पन्नविनष्टघटादावव्याप्तिभिया गन्धसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वरूपो लक्षणार्थः परिष्कार्य्यः ।

प्र० (३)—अपां किं लक्षणम् ? ( का० ग० सं० का० १६२६ )

उ० (३)—शीतस्पर्शसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वम् । तेनोत्पन्नविनष्टजले नाऽव्याप्तिः ।

प्र० (४)—तेजसः किं लक्षणं कतिविधञ्च तत् ? (का० ग० सं० का० १६२६ )

उ० (४)—उष्णस्पर्शसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वम् । तेजो द्विविधम्, नित्यमनित्यञ्च ।

प्र० (५)—वायुः कतिविधः किञ्च तस्य लक्षणमेतत् सर्व्वमुपपाद्यताम् । (का० ग० सं० का०, १६२०, १६२८)

उ० (५) रूपरहितत्वे सति स्पर्शवत्त्वं वायोर्लक्षणम् । रूपाऽसमाधिकरणस्पर्शसमानाधिकरणजातिमत्त्वं तदर्थः । नित्याऽनित्यभेदात् वायुर्द्विविधः । वायवीयः परमाणुर्नित्यः, कार्य्यरूपो वायुरनित्यः । शरीरेन्द्रियविषयभेदात् अनित्यवायुस्त्रिविधः । शरीरान्तःसञ्चारिणो वायोः प्राणापानादिसंज्ञा व्यपदिश्यते ।

प्र० (६) आकाशस्य किं लक्षणं किञ्च तत्र विभुत्वम् ? ( का० ग० सं० का० १६१६ )

उ० (६)—समवायेन शब्दवत्त्वम् । विभुत्वञ्च सर्वमूर्त्तसंयोगित्वम् । मूर्त्तत्वं क्रियावत्त्वम् ।

प्र० (६) आत्मा कतिविधः? किञ्च तस्य लक्षणम्? (का० ग० सं० का० १६१८,१६२६)

उ० (७)—आत्मा द्विविधः परमात्मा जीवात्मा चेति*। परमात्मा ईश्वरः, स च सर्वज्ञ एकश्च। जीवात्मा च प्रतिशरीरं भिन्नः। द्विविधेऽप्यात्मनि विभुत्वं नित्यत्वञ्च वर्त्तते। समवायेन ज्ञानवत्त्वमात्मनो लक्षणम्।

प्र० (८)—रूपस्य लक्षणं प्रतिपद्व्यावृत्तिप्रदर्शनपूर्वकं व्याख्यायताम्। का० ग० सं० का० १६१७)

उ० (८)—'चक्षुर्मात्रग्राह्यो गुणो रूपम्' इति मूलोक्तलक्षणे चक्षुस्त्वगुभयेन्द्रियग्राह्यसंख्यासंयोगादावतिव्याप्तिवारणाय मात्रपदम्, रूपत्वे रूपाभावे चातिप्रसङ्गभङ्गाय गुणपदम्। चक्षुर्मात्रग्राह्यत्वञ्च चक्षुरितरेन्द्रियाग्राह्यत्वे सति चक्षुर्ग्राह्यत्वम्। तत्र प्रथमदलेन संख्यादावतिव्याप्तिनिरासेऽपि अतीन्द्रियगुरुत्वादावतिव्याप्तिवारणाय 'चक्षुर्ग्राह्यत्वमिति द्वितीयदलम्। चक्षुर्ग्राह्यत्वमपि चक्षुरिन्द्रियजन्यलौकिकप्रत्यक्षविषयत्वम्। तेन गुरुत्वादेश्चक्षुरिन्द्रियजन्याऽलौकिकप्रत्यक्षविषयत्वेऽपि नातिव्याप्तिताद्वस्थ्यम्। तदितरेन्द्रियाग्राह्यत्वमपि तज्जन्यलौकिकप्रत्यक्षाऽविषयत्वम्। तथा च 'रूपी घट' इति स्पार्शनप्रत्यक्षे रूपस्याऽलौकिकप्रत्यक्षविषयत्वेऽपि नाव्याप्तिः।

यद्यप्येवमपि प्रभाभित्तिसंयोगेऽतिव्याप्तिः। न च परमाणुरूपे चक्षुर्ग्राह्यत्वाभावेन 'चक्षुर्ग्राह्यत्व' मित्यस्य चक्षुर्ग्राह्यजातिमत्त्वमित्यर्थो विवक्षणीयः, तथा च प्रभाभित्तिसंयोगे तादृशजातिमत्त्वाभावान्नातिव्याप्तिः, प्रभाभित्तिसंयोगत्वे जातित्वविरहात्, संयोगस्य जातिमत्त्वेऽपि तस्य चक्षुस्त्वगुभयेन्द्रियग्राह्यत्वात्। इति

---

* ननु आत्मनो द्वैविध्यमनुपपन्नम्, "एकमेवाद्वितीयम्" (छा० ६।२।१) इत्यादि श्रुतिविरोधादिति चेन्न, कालीताराविपुरसुन्दरीप्रभृतीनां रामकृष्णादीनाञ्च ऐक्य एव तत्तच्छ्रुतेस्तात्पर्य्यात्। अत एव देवीमाहात्म्ये—

"एकैवाहं जगत्यत्र द्वितीया का ममाऽपरा।
पश्यैता दुष्ट मय्येव विशन्त्यो मद्विभूतयः॥
ततः समस्ता ता देव्यो ब्रह्माणीप्रमुखा लयम्।
तस्या देव्यास्तनौ जग्मुरेकैवासीत्तदाऽम्बिका॥
अहं विभूत्या बहुभिरिह रूपैर्यदास्थिता।
तत्संहृतं मयैकैव तिष्ठाम्याजौ स्थिरो भव॥"—(१० म अ०, ५—८)

इति परमवाक्यं सूपपद्यते। अन्यथा शुम्भस्य विद्यमानतया "एकैवासीत्तदाऽम्बिके" त्युक्तिरसङ्गता स्यात्। एवञ्च जगत आधारत्वेन निर्देशोऽपि सङ्गच्छते, सजातीयद्वैतप्रतिषेधस्यैवाऽभिप्रेतत्वात्।

वाच्यम्, तथा सति रूपत्वे जातिमत्त्वविरहेणैवाऽतिव्याप्त्यप्रसक्त्या गुणपदाऽनर्थक्य-प्रसङ्गात्। तथापि प्रभात्वजातिमादाय प्रभायामतिव्याप्तिनिरासाय गुणवृत्तित्वेन जातिर्विशेषणीया। जातौ गुणवृत्तित्वलाभायैव गुणपदमिति न कस्यापि वैयर्थ्यम्।

**प्र० (९)—किंलक्षणं रूपं, कतिविधं, कुत्र च कीदृशम्? (का० ग० सं० का० १९२०; का० हि० वि० वि० १९१९)**

उ० (९)—रूपलक्षणञ्च (८) संख्यकोत्तरे द्रष्टव्यम्। शुक्लनीलपीतरक्त-हरितकपिशचित्रभेदात् रूपं सप्तविधम्। तत्र पृथिव्यां सप्तविधम्, जले अभा-स्वरशुक्लम्, तेजसि भास्वरशुक्लम्।

**प्र० (१०)—किंलक्षणकः स्पर्शः, कतिविधः, कुत्र च कीदृशः? (का० ग० सं० का० १९१६,१९१९,१९२९)**

उ० (१०)—त्वगिन्द्रियमात्रग्राह्यो गुणः स्पर्शः, स्पर्शत्वेऽतिव्याप्तिवारणाय गुणपदम्, मात्रपदञ्च संयोगादावतिव्याप्तिनिरासार्थम्। यद्यप्यत्रापि परमाणुस्प-र्शेऽव्याप्तिवारणाय त्वगिन्द्रियमात्रग्राह्यजातिमत्त्वमेव विवक्षणीयम्, तथा च स्प-र्शत्वेतिऽव्याप्त्ययोगाद् गुणपदमनर्थकमेव, तथापि मृदुत्वकठिनत्वयोर्ग्रन्थकृन्मते अ-वयवसंयोगविशेषरूपतया अवयवसंयोगगतवैजात्यस्यापि त्वगिन्द्रियमात्रग्राह्यत्वे मृदुत्वकठिनत्वयोरतिव्याप्तिवारणाय गुणत्वसाक्षाद्व्याप्यतादृशजातिमत्त्वस्यैव लक्षणे विवक्षणीयतया तल्लाभायैव गुणपदमित्यवधेयम्।

यद्वा चक्षुरग्राह्यत्वगिन्द्रियग्राह्यगुणविभाजकोपाधिमत्त्वं स्पर्शत्वमिति फलि-तोऽर्थः।

स्पर्शस्तु त्रिविधः—शीतः, उष्णः, अनुष्णाशीतश्च। तत्र शीतो जले, उष्णस्ते-जसि, अनुष्णाशीतश्च पृथिवीवाय्वोः।

**प्र० (११)—परिमाणस्य किं लक्षणम्, कतिविधश्च तत्? (का० ग० सं० का० १९१८)**

उ० (११)—मानव्यवहाराऽसाधारणकारणत्वं परिमाणत्वम्। मानव्यव-हारश्च 'अयं महत्त्वपरिमाणवान्' इत्यादिशब्दप्रयोगरूपः। एतादृशव्यवहारे च महत्त्वपरिमाणवत्त्वं व्यवहर्त्तव्यतावच्छेकम्। व्यवहारे च व्यवर्त्तव्यतावच्छेदकस्य कारणतया महत्त्वादिपरिमाणे निरुक्तव्यवहारकारणत्वस्य विद्यमानत्वात् लक्षण-समन्वयः।

**प्र० (१२)—परत्वापरत्वयोर्लक्षणं विभागञ्च प्रदर्श्य कुत्र कीदृशं वर्त्तते, तत् प्रदर्शय। (का० ग० सं० का० १९२३,१९२९)**

उ० (१२) परव्यवहाराऽसाधारणकारणत्वं परत्वस्य लक्षणम्। अपरव्यवहारा-

ऽसाधारणकारणत्वमपरत्वस्य लक्षणम् । परव्यवहारे व्यवहर्त्तव्यतावच्छेदकं परत्वम्, अपरव्यवहारे च व्यवहर्त्तव्यतावच्छेदकमपरत्वमिति लक्षणसङ्गतिः ।

परत्वमपरत्वञ्च द्विविधम्, दैशिकं कालिकं चेति । तत्र दूरस्थे दैशिकं परत्वम्, समीपस्थे दैशिकमपरत्वम् । ज्येष्ठे कालिकं परत्वम्, कनिष्ठे कालिकमपरत्वम् । यथा—'पाटलीपुत्रात् काशीमपेक्ष्य प्रयागः पर' इत्यनुभवात् पाटलीपुत्रावधिककाशीनिरूपितपरत्वं प्रयागे वर्त्तते । एवं 'पाटलीपुत्रात् प्रयागमपेक्ष्य काशी अपरा' इत्यनुभवात् पाटलीपुत्रावधिकप्रयागनिरूपिताऽपरत्वं काश्यां स्वीकार्य्यम् । 'चैत्रान्मैत्रः पर' इत्यनुभवाच्च मैत्रे चैत्रावधिकपरत्वम्, 'मैत्राच्चैत्रोऽपर' इत्यनुभवसिद्धमैत्रावधिकाऽपरत्वञ्च चैत्रे जायत इति ।

प्र० (१३)—बुद्धेः किं लक्षणम्? (का० ग० सं० का० १६१६)

उ० (१३)—सर्वव्यवहारहेतुगुणत्वं बुद्धेर्लक्षणम् । व्यवहारश्च शब्दप्रयोगः । ज्ञानं विना शब्दप्रयोगाऽसम्भवात् शब्दप्रयोगरूपव्यवहारहेतुत्वं ज्ञाने वर्त्तत इति लक्षणसमन्वयः ।

यद्वा जानामीत्यनुव्यवसायगम्यज्ञानत्वमेव बुद्धेर्लक्षणम् । तथा च 'घटं जानामी'त्यनुव्यवसायं प्रति विषयविधया ज्ञानस्य कारणत्वेन तादृशकारणतावच्छेदकतया ज्ञानत्वजातिसिद्धिः । ननु निर्विकल्पकस्य भगवज्ज्ञानस्य च तादृशानुव्यवसायाऽविषयतया निरुक्तानुव्यवसायसिद्धज्ञानत्वजातेः सकलज्ञानसाधारण्यं दुर्घटमिति चेत्, ज्ञानपदशक्यतावच्छेदकतयैव ज्ञानत्वजातिं साधयामः । इत्थञ्च मूले 'सर्वव्यवहारहेतु' रिति बुद्धेः स्वरूपकथनमिति भावः ।

प्र० (१४) बुद्धेः किं लक्षणम्? कतिविधा च बुद्धिर्भवति? (का० हि० वि० वि० १६२६)

उ० (१४) लक्षणन्तु (१३) संख्यकोत्तरे द्रष्टव्यम्; बुद्धिर्द्विविधा—स्मृतिरनुभवश्चेति ।

प्र० (१५)—अनुभवः कतिविधः? (का० ग० सं० का० १६१८)

उ० (१५)—अनुभवो द्विविधः,—यथार्थोऽयथार्थश्च ।

प्र० (१६)—यथार्थानुभवस्य किं लक्षणम्? (का० ग० सं० का० १६२३, १६२८) ।

उ० (१६) तद्वद्विशेष्यकतत्प्रकारकानुभवत्वं यथार्थानुभवस्य लक्षणम् । तत्पदं प्रकारपरम् । तद्वत्त्वञ्च प्रकारतावच्छेदकसम्बन्धेन । तेन कालिकसम्बन्धेन शुक्तौ रजतत्वसत्त्वेऽपि 'इदं रजतम्' इति भ्रमे नातिव्याप्तिः ।

प्र० (१७)—यथार्थानुभवः कतिविधः, किञ्च तत्र याथार्थ्यम्? (का० ग० सं० का० १६१६, १६२० ) ।

उ० (१७) प्रत्यक्षानुमित्युपमितिशाब्दभेदाद् यथार्थानुभवश्चतुर्विधः। तद्वद्विशेष्यकतत्प्रकारकत्वमेव तत्र याथार्थ्यम्।

**प्र० (१८) अयथार्थानुभवस्य किं लक्षणम्? (का० हि० वि० वि० १९२४)**

उ० (१८) तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशाल्यनुभवत्वमयथार्थानुभवस्य लक्षणम्।

**प्र० (१९) कारणं कतिविधं किञ्च तस्य लक्षणम्? (का० गा० सं० का० १९१७,१९१९,१९२५,१९२८; का० हि० वि० वि० १९२९)।**

उ० (१९)—'कार्य्यनियतपूर्ववृत्ति कारणम्' इति मूलोक्तलक्षणस्य कार्य्यं प्रति कार्योत्पत्तिं प्रति 'नियतं' व्यापकं सत् यत् पूर्ववृत्ति तत् कारणमित्यर्थः। यथा घटं प्रति दण्डः कारणं तत्र चेदमस्ति लक्षणम्। अत्र हि कार्यो घटः, तदुत्पत्तिं प्रति दण्डो व्यापकः, यत्र यत्र घटोत्पत्तिः, तत्र तत्र दण्ड इति व्याप्तौ दण्डस्य व्यापकत्वात्। कार्य्यपूर्ववर्त्ती दण्ड इति कार्योत्पत्तिव्यापकत्वे सति पूर्ववृत्तित्वरूपलक्षणस्य दण्डे सत्त्वात्तत्समन्वयः। नियतपूर्ववर्त्तिनस्तन्तुरूपादेः पटं प्रति कारणत्वं स्यादित्यनन्यथासिद्धत्वमपि लक्षणे निवेशनीयम्।

समवाय्यसमवायिनिमित्तभेदात् कारणं त्रिविधम्।

**प्र० (२०)—असमवायिकारणस्य लक्षणं सोदाहरणं ब्रूत। (का० गा० सं० का १९१६,१९३०; का० हि० वि० वि० १९२०)।**

उ० (२०) कार्य्येण कारणेन वा सहैकस्मिन्नर्थे समवेतं सत् कारणमसमवायिकारणम्। यथा तन्तुसंयोगः पटस्य तन्तुरूपं पटगतरूपस्य। अत्र कार्यपदं स्वकार्य्यपरम्, कारणपदञ्च स्वकार्य्यसमवायिकारणपरम्। निष्कर्षस्तु—समवायसम्बन्धावच्छिन्नकार्य्यतानिरूपित—समवाय स्वसमवायिसमवेतत्वाऽन्यतरसम्बन्धावच्छिन्नकारणत्वम्।

**प्र० (२१) समवायिकारणाऽसमवायिकारणयोर्लक्ष्ये लक्षणसमन्वयः क्रियताम्। (का० गा० सं० का० १९२३)**

उ० (२१) यत्समवेतं कार्य्यमुत्पद्यते तत् समवायिकारणमिति लक्षणम्। 'येषु' तन्तुप्रभृतिषु 'समवेतं' समवायेन सम्बद्धं सत् 'कार्य्यं' पटाद्यात्मकं 'उत्पद्यते' जायते, 'तत्' तन्तुप्रभृतिकं समवायिकारणम् (पटादेरिति शेषः) इत्यर्थः। निष्कर्षस्तु समवायसम्बन्धावच्छिन्नकार्य्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणत्वम्। पटसमवायिकारणस्य लक्ष्याश्च तन्तवः। पटरूपं कार्य्यं तन्तुषु समवेतं सदुत्पद्यते तस्मात् तन्तवः पटस्य समवायिकारणमिति लक्ष्ये लक्षणसमन्वयः।

असमवायिकारणलक्षणन्तु (२०) संख्यकोत्तरे द्रष्टव्यम् । असमवायिकारणस्य
ऽयं द्विविधम्, स्वकार्य्येण सहैकस्मिन्नर्थे समवेतं सत् कारणमित्येकम्, स्वकार्य्य-
मवायिकारणेन सहैकस्मिन्नर्थे समवेतं सत् कारणमित्यपरम् । तत्र प्रथमोदाहरणं
टस्य तन्तुसंयोगः । अत्र पटात्मकं कार्य्यं तन्तुसमवेतम्, अवयवावयविनोः
मवायात् । गुणगुणिनोश्च समवायात् तन्तुसंयोगोऽपि तन्तुषु समवेतः । एवञ्च
वकार्य्येण पटात्मकेन सह एकस्मिन् अर्थे तन्तौ समवेतत्वे सति कारणत्वात् तन्तु-
ंयोगः पटं प्रत्यसमवायिकारणम् ।

द्वितीयोदाहरणञ्च तन्तुरूपं पटगतरूपस्य । स्वं तन्तुरूपम्, स्वकार्य्यं पट-
रूपम्, स्वकार्य्यसमवायिकारणं पटः, स च तन्तुषु समवेतः, तन्तुरूपमपि तन्तुषु
मवेतम् । तथा च स्वकार्य्यसमवायिकारणेन पटेन सह एकस्मिन् अर्थे तन्तौ
मवेतत्वे सति कारणत्वात् तन्तुरूपं पटीयरूपस्याऽसमवायिकारणमिति लक्ष्ये
क्षणसङ्गतिः ।

**प्र० (२२) प्रत्यक्षस्य किं लक्षणम्, कतिविधश्च तत् ? ( का० ग०
सं० का० १९३० )**

उ० (२२) ४७ पृष्ठं द्रष्टव्यम् ।

**प्र० (२३) प्रत्यक्षज्ञानहेतुरिन्द्रियार्थसन्निकर्षः कतिविधः ? ( का०
ग० सं० का० १९१६, १९१८, १९२१, १९२५, १९२९; का० हि० वि०
वि० १९२०, १९२४ )**

उ० (२३) ४९, ५०, ५१, ५२, ५३ पृष्ठानि द्रष्टव्यानि ।

**प्र० (२४) अनुमानं कतिविधं, किञ्च तस्य लक्षणं विशदीकृत्य
प्रदर्श्यताम् । ( का० ग० सं० का १९१७, १९३० )**

उ० (२४) ५५, ५८, ५९, ६० पृष्ठानि द्रष्टव्यानि ।

**प्र० (२५) अवयवाः के, कानि च तेषामुदाहरणानि ?**

उ० (२५) ६० पृष्ठं द्रष्टव्यम् ।

**प्र० (२६) लिङ्गं कतिविधम् ? कानि तेषामुदाहरणानि ? ( का०
ग० सं० का० १९१७, १९२०, १९२५, १९२८ )**

उ० (२६) ६२, ६३ पृष्ठे द्रष्टव्ये ।

**प्र० (२७) हेत्वाभासाः के, कानि च तेषामुदाहरणानि ? ( का०
ग० सं० का० १९१७, १९२५: का० हि० वि० वि० १९२९)**

उ० (२७) ६५, ६६, ६७, ६८, ६९, ७०, ७१ पृष्ठानि द्रष्टव्यानि ।

**प्र० (२८) उपमानस्य किं लक्षणं कया प्रणाल्या च तद् भवति ?
( का० ग० सं० का० १९२० )**

उ० (२८) उपमितित्वावच्छिन्नकार्य्यतानिरूपितव्यापारसम्बन्धावच्छिन्नकारणत्वमुपमानस्य लक्षणम्। तद्भवनप्रणाली च ७२ पृष्ठे द्रष्टव्या।

प्र० (२९) वाक्यार्थज्ञाने हेतवः के, तेषां लक्षणान्युदाहरणानि च स्पष्टीकुरु। ( का० ग० सं० का० १९१६, १९१८, १९२३, १९२५ )

उ० (२९) ७७ पृष्ठं द्रष्टव्यम्।

प्र० (३०) वाक्यं कतिविधम्? (का० ग० सं० का० १९१६, १९३०)

उ० (३०) ७७ पृष्ठं द्रष्टव्यम्।

प्र० (३१) अयथार्थानुभवः कतिविधः? ( का० ग० सं० का० १९२६; का० हि० वि० वि० १९२४ )

उ० (३१) ८१ पृष्ठं द्रष्टव्यम्।

प्र० (३२) संशयविपर्य्ययतर्काणां लक्षणानि प्रदर्श्यन्ताम्। (का० ग० सं० का० १९२८, १९३०) तर्कस्य च कस्मिन्पदार्थेऽन्तर्भावः? ( का० हि० वि० वि० १९२० )

उ० (३२) लक्षणानि ८१, ८२ पृष्ठयोर्द्रष्टव्यानि। तर्कस्य बुद्धावन्तर्भावः, तस्याऽयथार्थानुभवविशेषत्वात्।

प्र० (३३) स्मृतिः कतिविधेति सविस्तरमुपपाद्यताम्।

उ० (३३) ८३ पृष्ठं द्रष्टव्यम्।

प्र० (३४) धर्म्माधर्म्मयोर्लक्षणमभिधीयताम्। ( का० ग० सं० का० १९३० )

उ० (३४) ८५ पृष्ठं द्रष्टव्यम्।

प्र० (३५) आत्ममात्रविशेषगुणाः के? (का० ग० सं० का० १९३०)

उ० (३५) ८५ पृष्ठं द्रष्टव्यम्।

प्र० (३६) संस्कारः कतिविधः? कुत्र च कीदृशः? (का० ग० सं० का० १९१९, १९२१, १९२७ )

उ० (३६) ८६, ८७ पृष्ठे द्रष्टव्ये।

प्र० (३७) कर्म्म कतिविधं किञ्च तस्य लक्षणम्? ( का० ग० सं० का० १९१९, १९२८ )

उ० (३७) उत्क्षेपणाऽपक्षेपणाऽऽकुञ्चनप्रसारणगमनभेदात् कर्म्म पञ्चविधम्। 'चलनात्मकं कर्म्म' इति मूलस्य च 'चलती'तिप्रत्यक्षसिद्धकर्म्मत्वजातिमत्त्वं कर्म्मणो लक्षणमित्यर्थः। 'चलनात्मक' संयोगविभागानुकूलमित्यर्थ इत्यपि केचित्।

प्र० ( ३८ ) प्रतिपदव्यावृत्तिपुरःसरं सामान्यस्य लक्षणं व्याख्यायताम्।

उ० (३८) 'नित्यमेकमनेकानुगतं सामान्यम्' इति मूलम्। अत्र 'नित्यत्वं' प्रागभावाऽप्रतियोगित्वं ध्वंसाऽप्रतियोगित्वं वा, एकतरकथनेनैव निर्वाहात्। 'अत्रै-कमिति ग्रामादिकम्' इति **नृसिंहप्रकाशिका**। 'एकमनेकानुगतमिति स्वरू-पतोऽनेकानुगतमित्यर्थ इति **वाक्यवृत्तिः**। 'जलपरमाणुगतरूपेऽतिव्याप्तिवार-णाय एकेति' इति दीपिकायां क्वचिदधिकः पाठः। अनेकानुगतत्वञ्च समवायेन अनेकवृत्तित्वम्। तथा च नित्यत्वे सति समवायसम्बन्धेन अनेकवृत्तित्वमिति सर्व-सम्मतं सामान्यलक्षणमिति। तत्र संयोगादावतिव्याप्तिवारणाय नित्यत्वे सतीति। अत्यन्ताभावादावतिव्याप्तिनिरासाय समवायसम्बन्धेनेति। गगनपरिमाणादावति-प्रसङ्गभङ्गाय अनेकेति।

नन्वेवमपि नित्यसंयोगेऽतिव्याप्तिः, तस्य नित्यत्वात्, समवायेनाऽनेकवृत्तित्वा-च्चेति चेत्, तस्य निरस्तत्वादिति **मुक्तावलीप्रकाशकाराः**। तन्न सम्यक्, द्रव्य-त्वजातिसिद्धिप्रकरणे 'विभागस्य वे'ति मुक्तावलीग्रन्थस्याऽनुत्थितिप्रसङ्गात्। वयन्तु ब्रूमः—अत्र अनेकपदं बहुपरम्। तथा च बहुनिरूपितसमवायसम्बन्धा-वच्छिन्नाधेयत्वं सामान्यत्वमित्यर्थः। सम्बन्धमात्रस्यैव एकप्रतियोगिकत्वाऽपरानु-योगिकत्वनियमेन कस्यापि संयोगस्य न बहुसमवेतत्वम्। बहुत्वन्तु त्रित्वादिक-मेव। अत्र च कल्पे नित्यत्वे सतीति न देयम्, अनावश्यकत्वात्। सामान्य लक्षणस्य 'विचारविस्तरस्तु' ८९ ९० पृष्ठयोर्द्रष्टव्यः।

प्र० (३९) विशेषस्य किं लक्षणम्?

उ० (३९) ९० पृष्ठमवलोकनीयम्।

प्र० (४०) समवायस्य किं लक्षणम्? (का० ग० सं० का० १९२९)

उ० (४०) नित्यत्वे सति सम्बन्धत्वं समवायस्य लक्षणम्। संयोगेऽतिव्या-प्तिवारणाय सत्यन्तम्। गगनादावतिप्रसङ्गभङ्गाय विशेष्यभागः। अत्र सम्बन्ध-त्वञ्च स्वरूपत्वानवच्छिन्नसांसर्गिकविषयताऽऽश्रयत्वम्। तेन गगनादीनां स्वरूप-त्वेन सम्बन्धत्वेऽपि न क्षतिः।

न चैतल्लक्षणस्य नित्यसंयोगेऽतिव्याप्तिरिति वाच्यम्, अनित्यावृत्तिसंसर्गता-वच्छेदकधर्म्मवत्त्वस्य विवक्षितत्वात्। संयोगत्वस्याऽनित्यावृत्तित्वाभावेन नोक्त-दोषावकाश इति।

प्र० (४१) कायुतसिद्धौ?

उ० (४१) ९१ पृष्ठं द्रष्टव्यम्।

प्र० (४२) कस्तावत् प्रागभावः?

उ० (४२) अनादिः सान्तः प्रागभाव इति। 'अनादिः' आदिरहितः।

आदिश्चात्रोत्पत्तिराद्यक्षणसम्बन्धरूपा । अन्तो ध्वंसः । प्रतियोगितासम्बन्धेन तद्वान् । तथा चोत्पत्तिरहितत्वे सति ध्वंसप्रतियोगित्वं प्रागभावत्वमिति फलितम् ।

प्र० ( ४३ ) प्रध्वंसाभावः किंलक्षणकः ?

उ० (४३) सादिरनन्तः प्रध्वंसाभाव इति मूलम् । 'सादिः' उत्पत्तिमानित्यर्थः । 'अनन्तः' ध्वंसाप्रतियोगी । इदञ्च स्वरूपकीर्त्तनम्, तेन नात्माश्रयः । लक्षणन्तु उत्पत्तिमत्त्वे सत्यभावत्वम् । अत्यन्ताभावादिवारणाय सत्यन्तम् । घटादावतिव्याप्तिनिरासाय विशेष्यदलम् ।

## तर्कसंग्रहदीपिकायाम्

**प्र० ( ४४ ) तमो दशमद्रव्यमिति कस्य मतम्? तन्मते तस्य द्रव्यत्वे का युक्तिः? कया युक्त्या तन्मतं दूषितम्? तमसो द्रव्यत्वेऽपि क्षित्यादावन्तर्भावसम्भवात् दशमत्वकथने ग्रन्थकारस्य किं तात्पर्य्यम्? ( क० सं० प० १८२३ )**

उ० (४४) भट्टमते द्रव्याण्येकादशविधानि । तदुक्तं मानमेयोदये—

"पृथिवी सलिलं तेजः पवमानस्तमस्तथा ।
व्योमकालदिगात्मानो मनः शब्द इति क्रमात् ॥"

तथा च तन्मते तमसो द्रव्यत्वेऽपि न दशमद्रव्यत्वम्, तत्र पञ्चमत्वस्यैव प्रतिपादितत्वात् । वेदान्तिमतेऽपि तमो न दशमद्रव्यम् । न च आनन्दज्ञानेन वेदान्तिना तर्कसंग्रहे—

"द्रव्ये नवत्वनिर्बन्धो नैव सिद्धिमुपाश्नुते ।
तमसो दशमस्यापि संसिद्धेर्मानयुक्तित ॥"

इत्युक्तमिति वाच्यम्, तत्र वैशेषिकमतखण्डनार्थमेव तदुक्तेः । अत एव तत्रैव— "न हि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव द्रव्याणि इति युक्तम्, रूपादिमतस्तमसोऽपि दशमस्य दृश्यमानत्वा" (२१ पृ० ) दित्यग्रिमग्रन्थोऽपि सूपपन्नः । तस्मात् 'तमो दशमद्रव्यमिति' कस्य मतम्?' इति प्रश्नो न युक्तः, 'तमो द्रव्यमिति कस्य मतम्' इति प्रश्न एव ज्यायान् ।

तमो द्रव्यं नीलरूपवत्त्वात्, क्रियावत्त्वाच्च घटवदित्यनुमानरूपयुक्तिरेव तमसो द्रव्यत्वसाधिका । तमसि द्रव्यत्वसाधकहेतुद्वयं न स्वरूपासिद्धम्, 'नीलं तमश्चलती'त्यबाधितप्रात्यक्षिकप्रतीतेः । एतन्मतं दूषितमित्थम्—तमसः प्रौढप्रकाशकतेजःसामान्याभावाऽभिन्नत्वादेवोपपत्तौ द्रव्यान्तरकल्पनमयौक्तिकम् ।

ननु रूपादिमतस्तमसः कथमभावस्वरूपत्वमिति चेत्, तमो न रूपवत् आलोकसंयोगं विनापि चक्षुर्ग्राह्यत्वात्, आलोकाभाववदित्यनुमानेन तत्र रूपव-

द्भिन्नत्वस्यैव सिद्धेः। न चैवं 'नीलं तमश्चलती'ति प्रतीतेः का गतिरिति देशनीयम्, निरुक्तबाधकस्य जागरूकत्वेन 'नीलं नभ' इति प्रत्ययवत् वेगवद्वाष्पशकटारूढस्य वृक्षश्चलतीति प्रत्ययवच्च 'नीलं तम' इति प्रत्ययस्य 'चलति तम' इति प्रत्ययस्य च भ्रमत्वात्।

क्षित्यादिनवद्रव्येषु तमसोऽन्तर्भावो न सम्भवति, गन्धाभावलिङ्गेन तस्य क्षितिभिन्नत्वसिद्धेः, नीलरूपवत्त्वलिङ्गेन च जलाद्यष्टकान्यतमभिन्नत्वसिद्धेरिति तमोद्रव्यत्ववादिभिस्तस्य वैशेषिकमते दशमद्रव्यत्वमाशङ्कितम्।

**प्र० (४५) अन्धकाराऽभावस्य तेजस्त्वाङ्गीकारे को दोषः? (क० सं० प० १९२६)**

उ० (४५) अन्धकाराऽभावस्य तेजस्त्वाङ्गीकारे उष्णस्पर्शभास्वररूपबुद्धिरनुपपन्ना स्यात्, अभावे गुणवत्ताऽसम्भवात्। 'उष्णं तेज' इत्येष प्रत्ययो भ्रमरूप इति न शक्यते वक्तुम्, क्वचित् प्रसिद्धस्यैवाऽन्यत्र भ्रमसम्भवात्; न हि उष्णस्पर्शो द्रव्यान्तरे प्रसिद्धो यत् तस्याऽन्धकाराभावरूपे तेजस्यारोपः स्यात्। नाप्युत्तरकाले बाधज्ञानं येन तादृशप्रत्ययस्य भ्रमत्वमङ्गीकरणीयम्। एवञ्च तेजसोऽन्धकाराभावरूपत्वे उष्णस्पर्शस्य भास्वररूपस्य च निरालम्बनतापत्तिः। तदाश्रयतया द्रव्यान्तरकल्पने च गौरवं स्यात्।

**प्र० (४६) 'स्पर्शानुमेयो वायु'रिति। अत्र काऽनुमानप्रणाली? प्रत्यक्षस्पर्शाश्रयत्वेन वायोः कथं न प्रत्यक्षत्वम्? (क० सं० प० १९१६)**

उ० (४६) महत्त्वोद्भूतरूपवद्द्रव्यसंयोगाऽसमानकालीनप्रत्यक्षविषयस्पर्शः पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्यसमवेतः पृथिव्याद्यष्टद्रव्याऽसमवेतत्वे सति द्रव्यसमवेतत्वादिति परिशेषानुमानात् पृथिव्याद्यष्टद्रव्यातिरिक्तं वायुनामकं नवमद्रव्यं सिध्यति।

प्रत्यक्षस्पर्शाश्रयत्वेन वायोः प्रत्यक्षत्वं न सिध्यति, उपाधेर्जागरूकत्वात्। उपाधिश्चोद्भूतरूपवत्त्वम्।

**प्र० (४७) मनसोऽणुत्वे किं मानम्? तस्य विभुत्वे वा का हानिः? (क० सं० प० १९१६)**

उ० (४७) मनः अणु विभुभिन्नत्वे सति नित्यपरिमाणाश्रयत्वात्, परमाणुवदित्यनुमानेनैव मनसोऽणुत्वं साधनीयम्। मनसि विभुभिन्नत्वञ्च—मनो न विभु आत्मसंयुक्तत्वात्, घटवदित्यनुमानेन सिध्यति। नाऽयं हेतुः स्वरूपासिद्धः, भावकार्य्यमात्रस्य त्रिविधकारणजन्यत्वनियमेन आत्ममनःसंयोगरूपाऽसमवायिकारणाऽसम्वलने ज्ञानाऽनुत्पत्तिप्रसक्तेः। न च विभुद्वयसंयोगोऽस्तु, इति वाच्यम्, तत्संयोगस्य नाशाऽसम्भवात् ज्ञानजनकीभूतपुरीतद्व्यतिरिक्तप्रदेशावच्छिन्नाऽऽ-

त्मनःसंयोगस्य सर्वदैव जागरूकत्वेन सुषुप्त्यभावप्रसङ्गात्। नित्यपरिमाणाश्रयत्वमपि मनसो नित्यद्रव्यत्वेन कल्पनीयम्।

मनसो विभुत्वे च सर्वेन्द्रियसन्निकृष्टान्मनसः सर्वेन्द्रियकमेकमेव ज्ञानमुत्पद्येत, न तावत् सामग्री विरोधाऽविरोधमाकलयति, येन चाक्षुषत्वरासनत्वादिविरोधाय बिभ्येत्। अधिकं ३१ पृष्ठेऽनुसन्धेयम्।

**प्र० ( ४८ ) परिमाणस्य किं लक्षणम्? तच्च कतिविधम्? ( क० सं० प० १९१६ )**

उ० (४८) (११) संख्यकोत्तरं द्रष्टव्यम्।

**प्र० ( ४९ ) किं करणलक्षणं तर्कसंग्रहकृदभिमतम्? तत्रत्यपदानाञ्च का व्यावृत्तयः? ( क० सं० प० १९१९, १९२१ )**

उ० (४९) 'असाधारणकारणम् करणम्' इति तर्कसंग्रहकारः। ईश्वरस्तज्ज्ञानेच्छाकृतयः दिक्कालाऽदृष्टप्रागभावा इत्यष्टौ साधारणकारणानि। तत्त्वञ्च कार्य्यत्वावच्छिन्नकार्य्यतानिरूपितकारणत्वम्। असाधारणकारणत्वञ्च कार्य्यत्वातिरिक्तधर्मावच्छिन्नकार्यतानिरूपितकारणत्वम्। व्यापारवत्त्वे सतीति पूरणीयम्। व्यापारवत्त्वं च जनकतासम्बन्धेन। व्यापारत्वञ्चात्र जनकत्वमात्रम्, न तु तज्जन्यत्वे सति तज्जन्यजनकत्वरूपम्, गौरवात्। एवञ्च जनकतासम्बन्धेन स्वजनकवत्त्वे सति स्वाऽसाधारणकारणत्वं स्वकरणत्वमिति फलितम्। व्यापारवारणाय सत्यन्तम्। कुलालपितुरीश्वरादिसाधारणकारणानाञ्च निराकरणाय विशेष्यदलम्।

यत्तु 'दीपिकाप्रकाश' (नीलकण्ठी) कारैः "व्यापारत्वेनाभिमतेन्द्रियसंयोगादिकमेव करणम्। एतच्च 'लिङ्गपरामर्शोऽनुमानम्' इति मूल एव स्फुटीभविष्यति।" इत्यभिहितम्, तच्चिन्त्यम्, "तत्करणमिन्द्रियम्। तस्मात् इन्द्रियं प्रत्यक्षप्रमाणमिति सिद्धम्।" इत्यग्रिममूलग्रन्थविरोधापत्तेः।

नन्वेवमपि घटादिविषयस्यापि चाक्षुषप्रमां प्रति करणत्वापत्तिः, तस्य जनकतासम्बन्धेन घटचक्षुःसंयोगरूपस्वजनकवत्त्वात्, प्रत्यक्षे विषयस्य कारणत्वाच्चेति चेत्, अत्र केचित—कारणतायां तादात्म्यसम्बन्धानवच्छिन्नत्वं निवेश्य विषये करणत्वं निराकार्यमिति वदन्ति। तन्न समीचीनम् 'तन्तुभिः पटं करोती'त्यादौ करणीभूततन्तुष्वव्याप्तिः तत्र तादात्म्यसम्बन्धानवच्छिन्नकारणत्वविरहात्।

व्यापारसम्बन्धावच्छिन्नकारणत्वं करणत्वस्वरूपमिति **नृसिंहप्रकाशिका।** एवञ्च न विषये करणत्वापत्तिः, विषयस्य व्यापारीभूतसम्बन्धेन कारणत्वाभावात्।

यद्वा तद्विशिष्टजनकताश्रयत्वं तत्करणत्वम्। वैशिष्ट्यञ्च स्वनिरूपितत्वस्वजनकनिर्वाह्यत्वोभयसम्बन्धेन। तथा च चक्षुर्निष्ठजनकतायां चाक्षुषप्रत्यक्षनिरूपितत्वस्य तज्जनकनिर्वाह्यत्वस्य च सत्त्वात्तत्र लक्षणसमन्वयः। विषयनिष्ठजनकतायां

संयोगनिर्वाह्यत्वाभावान्न विषयेऽतिप्रसक्तिः। निर्वाह्यत्वं निर्वाहकत्वञ्च स्वरूप-सम्बन्धविशेषः।

**प्र० ( ५० ) दण्डरूपादेरिव कपालसंयोगस्यापि कथं नाऽन्यथा-सिद्धत्वम्? तस्यापि कपालेन सहैव पूर्ववृत्तित्वावगमात्।**

उ० (५०) स्वातन्त्र्येण तत्कार्य्यनिरूपितान्वयव्यतिरेकशून्यत्वे सतीति विशेष-णान्नोक्तापत्तिः। अन्वयः स्वाधिकरणे कार्यसत्त्वम्, व्यतिरेकः स्वाभावाधिकरणे कार्य्यासत्त्वम्। अन्वयव्यतिरेकयोः स्वातन्त्र्यञ्च स्वभिन्नप्रकृतकार्यकारणान्वयव्यति-रेकाप्रयुक्तत्वम्। दण्डरूपादीनामन्वयव्यतिरेकौ स्वभिन्नस्य घटात्मकप्रकृतकार्य्य-कारणीभूतदण्डस्यान्वयव्यतिरेकप्रयुक्तौ। स्वाश्रयाश्रयत्वसम्बन्धेन दण्डरूपादि-सत्त्वस्य दण्डसत्त्वाधीनतया तेषामन्यथासिद्धत्वम्, कपालसंयोगस्य च न तथा, तस्य कारणान्तराघटितसाक्षात्समवायसम्बन्धेनैवान्वयव्यतिरेकात्। तथा च कारणाऽन्तराऽघटितसम्बन्धेन नियतान्वयव्यतिरेकशून्यत्वे सति येन सहैव यस्य पूर्ववृत्तित्वावगमः; तदन्यथासिद्धम्। दण्डरूपस्य स्वाश्रयाश्रयत्वसम्बन्धेनैवान्वय-व्यतिरेकयोर्गृहीततया तस्य दण्डरूपकारणान्तरघटितत्वम्। सत्यन्तमात्रोक्तौ चक्षु-षोऽपि चाक्षुषं प्रति अन्यथासिद्धिः स्यात्, चक्षुःप्रतियोगिकसंयोगस्य चाक्षुषं प्रति कारणतया तत्सम्बन्धेनैव चक्षुषः कारणत्वात्। अतो विशेष्यदलम्।

**प्र० ( ५१ ) सर्वेषां कार्याणां समवायिकारणमस्ति न वा, सुस्प-ष्टमुत्तरं क्रियताम्। ( क० सं० प० १९१९ )**

उ० (५१) 'यत् समवेतं कार्यमुत्पद्यते तत् समवायि कारणम्' इति लक्षणात् ध्वंसाद्यसमवेतकार्य्याणां समवायिकारणं नास्ति।

**प्र० (५२) करणकारणयोर्लक्षणं लिख। (का० हि० वि० वि० १९२०)**

उ० (५२) करणलक्षणं (४९) संख्यकोत्तरे कारणलक्षणञ्च (१९) संख्या-कोत्तरे द्रष्टव्यम्।

**प्र० ( ५३ ) व्याप्तिज्ञानमनुमितावसमवायिकारणं निमित्तकारणं वा? तयोश्च कस्य किं लक्षणम्? ( क० सं० प० १९२६ )**

उ० (५३) व्याप्तिज्ञानमनुमितौ निमित्तकारणम्, आत्मविशेषगुणानां कुत्राप्य-समवायिकारणत्वाभावात्। तथा चोक्तं भाषापरिच्छेदे—"अथ वैशेषिके गुणे। आत्मनः स्यान्निमित्तत्वम्।"

ननु आत्मविशेषगुणानामसमवायिकारणत्वे का हानिर्न हि शपथमात्रेणैव वस्तुसिद्धिः स्यादिति चेत्, न, स्वसमवायिकारणे प्रत्यासन्नं सत् स्वविनाशक्षणो-त्पन्नकार्यकं यद् यत् तदन्यत्वस्यैवाऽसमवायिकारणतयाऽऽत्मविशेषगुणानामसम-

वायिकारणत्वाऽसम्भवात्। असमवायिकारणलक्षणं (२०) संख्यकोत्तरे द्रष्टव्यम्। समवायिकारणत्वाऽसमवायिकारणत्वभिन्नकारणत्वं निमित्तकारणस्य लक्षणम्।

**प्र० ( ५४ ) गगनपरिमाणं कारणं न वेत्यस्य सयुक्तिकमुत्तरं कार्य्यम्। ( क० सं० प० १६२३ )**

उ० (५४) विषयतया षड्विधप्रत्यक्षे समवायस्वाश्रयसमवायस्वाश्रयसमवेतसमवायाऽन्यतमसम्बन्धेन महत्त्वस्य कारणत्वेन शब्दप्रत्यक्षे गगनपरिमाणस्य कारणत्वमावश्यकम्। कार्यतावच्छेदककोटौ श्रावणाऽन्यत्वप्रवेशे गौरवात्।

यद्यपि "कारणत्वञ्चाऽन्यत्र पारिमाण्डल्यादिभ्य" इति प्रशस्तपादभाष्यव्याख्यानावसरे—"आदिग्रहणात् परममहत्त्वं ''''' गृह्यत" (३० पृ०) इति किरणावलीग्रन्थसन्दर्भेण परममहत्परिमाणमपि न कस्यचित् कारणमित्युदयनाचार्य्याणामाशयो लभ्यते, तथापि ज्ञानातिरिक्तं प्रत्येव परममहत्त्वादीनामकारणत्वमाचार्याभिप्रेतम्, "कारणत्वञ्च ज्ञातृधर्मेतरकार्य्यापेक्षये" ति पूर्वग्रन्थस्वारस्यात्। 'ज्ञातृधर्म्माः' ज्ञानादयः, तदतिरिक्तभावकार्य्यं प्रति कारणत्वं पारिमाण्डल्यादिभिन्नानां साधर्म्यमिति तदर्थः। तथा च शब्दप्रत्यक्षस्य ज्ञानत्वेन तं प्रति गगनपरिमाणस्य कारणत्वेऽपि न क्षतिः।

[ (५३) (५४) संख्यकप्रश्नौ 'भाषापरिच्छेदे' 'सिद्धान्तमुक्तावल्यां' वा समीचीनौ, न तु तर्कसंग्रहदीपिकायाम्।

**प्र० ( ५५ ) कति प्रमाणानि ? तेषां किं सामान्यलक्षणम् ? स्मृतिकरणं प्रमाणं न वा ? नो चेत् तत्र को हेतुः ? ( क० सं० प० १६२६ )**

उ० (५५) प्रत्यक्षानुमानोपमानशब्दभेदात् प्रमाणं चतुर्विधम्। प्रमायाः करणं प्रमाणमिति प्रमाणसामान्यलक्षणम्। 'यथार्थानुभव एव शास्त्रे प्रमा इत्युच्यत' इति दीपिकाकारलिखनात् स्मृतौ प्रमात्वं नास्तीति प्रतीयते। तथा च स्मृतित्वं न प्रमावृत्ति कारणीभूतज्ञानविषयविषयकमात्रवृत्तिजातित्वात्, इच्छात्ववदित्यनुमानेन स्मृतित्वे प्रमावृत्तित्वाभावः सिध्यति। अतः स्मृतिकरणस्य न प्रमाणलक्षणाऽऽक्रान्तत्वम्। स्मृतिकरणस्य प्रमाणत्वे "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानी"ति (१।१।३) पारमर्षसूत्रविरोधोऽपि द्रष्टव्यः।

**प्र० ( ५६ ) निर्विकल्पकज्ञानं कीदृशम् ? तत्र च किं प्रमाणम् ? ( क० सं० प० १६२३ )**

उ० (५६) 'इदं विशेष्यम्', 'इदं विशेषणम्', 'अयं संसर्ग' इत्येवं तत्तद्धर्मप्रकारेण घटघटत्वतत्संसर्गानवगाहि 'घटघटत्वे' इत्याकारकं ज्ञानं निर्विकल्पकम्। प्रकारतादित्रिविधविषयतामध्ये एकस्या अपि तत्राऽसत्त्वात् प्रकारताशून्यज्ञानत्वं विशेष्यताशून्यज्ञानत्वं वा निर्विकल्पकस्य लक्षणम्। निर्विकल्पके प्रमाणमनुमान-

रूपम् । तच्च—घट इति विशिष्टज्ञानं विशेषणज्ञानजन्यं विशिष्टज्ञानत्वात्, दण्डीति ज्ञानवदित्येवंरूपम् । विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य कारणत्वादत्र नाऽप्रयोजकत्वशङ्काऽवकाशोऽपि ।

**प्र० ( ५७ ) अनुमापकलिङ्गं कतिविधम् ? उदाहरणप्रदर्शनपूर्वकमुत्तरं कार्य्यम् । ( क० सं० प० १९१९, १९२१ )**

उ० (५७)—६२, ६३ पृष्ठे द्रष्टव्ये ।

**प्र० ( ५८ ) आकाङ्क्षायोग्यतासन्निधिश्च वाक्यार्थज्ञाने हेतुरिति । आकाङ्क्षादीनां हेतुत्वाऽनङ्गीकारे को दोषः ? किं वा आकाङ्क्षादीनां लक्षणम् ? ( क० सं० प० १९१६ )**

उ० (५८) न हि प्रत्यक्षे महत्त्वस्येव शाब्दबोधे स्वरूपसत आकाङ्क्षादेः कारणत्वम्, आकाङ्क्षादिभ्रमात् निराकाङ्क्षकादिवाक्यादपि शाब्दबोधानुपपत्तेः । परन्तु आकाङ्क्षादिज्ञानस्यैव शाब्दबोधहेतुत्वमङ्गीकार्य्यम् । तदुक्तं दीपिकायाम्,—"आकाङ्क्षेति । आकाङ्क्षादिज्ञानमित्यर्थः ।" आकाङ्क्षादिज्ञानानां वाक्यार्थज्ञानहेतुत्वानङ्गीकारे तत्तज्ज्ञानविरहेऽपि निराकाङ्क्षवाक्यादितः शाब्दबोधापत्तिः स्यात् । तेषां लक्षणानि च ७७ पृष्ठे द्रष्टव्यानि ।

**प्र० ( ५९ ) कीदृशं वाक्यं प्रमाणम् ? वाक्यं कतिविधम् ? वाक्यस्याऽप्रामाण्ये को दोषः ? (क० सं० प० १९१९)**

उ० (५९) आप्तोच्चरितवाक्यं प्रमाणम् । आप्तश्च प्रकृतवाक्यार्थविषयकयथार्थज्ञानप्रयोज्यशब्दोच्चारणकर्त्ता । अत्र प्रकृतवाक्यार्थज्ञाने यथार्थत्वं सर्वांशे भ्रमभिन्नत्वम् । तेन 'वह्निना सिञ्चती'ति वाक्यजन्यज्ञानस्य किञ्चिदंशे प्रमात्वेऽपि न क्षतिः । तत्कालीनतत्पुरुषीयप्रकृतवाक्यत्वं तत्कालीनतत्पुरुषीयप्रमाणशब्दत्वमिति पर्यवसितम् ।

वाक्यं द्विविधम्,—वैदिकं लौकिकञ्च । वाक्यस्याऽप्रामाण्ये जागतिकसर्वव्यवहारविलोपापत्तिः स्यात् । तथा च सर्वविधिनिषेधानां वाक्यात्मकतया आस्तिका अपि नित्यनैमित्तिकादिकर्माणि परित्यजन्तु, अनुतिष्ठन्तु च कलञ्जादिभोजनं ब्रह्महत्यासुरापानादिकञ्च । धर्माधिकरणिकाश्च दूरे प्रक्षिपन्तु विचारकार्याणि, तेषां प्रायशः साक्ष्यादिवाक्यमूलकत्वात् । नाप्यवधारयन्तु प्रत्नतत्त्वविद् प्राचीनतमशिलालेखताम्रशासनादिपाठेन नवं नवमैतिहासिकं तत्त्वम् । नापि वणिजः पण्यानां क्रयविक्रयादिमूल्यवृत्तान्तमाकर्णयन्तः सावधाना भवन्तु वाणिज्येषु । नापि च प्रवासिनः प्रपन्नस्य पुत्रादेः पत्रादिपाठेन धनादिकं प्रेषयन्तु पित्रादिकाः ।

**प्र० ( ६० ) स्थितिस्थापकसंस्कारानङ्गीकारे को दोषः ? ( क० सं० प० १९२१ )**

उ० (६०) आकुञ्चितकटादौ मौर्व्यग्भावितधनुरादौ च पूर्वसंयोगविजातीयसंयोगनाशक-पूर्वसंयोगसजातीयसंयोगजनकरूपः प्रत्यक्षसिद्धः स्थितिस्थापकसंस्कारः कथं नाङ्गीकरणीयः ? प्रत्यक्षसिद्धोऽपि पदार्थो यदि नाऽङ्गीक्रियेत, तदा रूपादिकमपि नाङ्गीक्रियताम्। तथा च स्थितिस्थापकसंस्कारानङ्गीकारे प्रत्यक्षविरोध एव दोषः।

प्र० ( ६१ ) कति संस्काराः ? तदनङ्गीकारे च को दोषः ? ( क० सं० प० १८२३ )

उ० (६१) संस्कारस्त्रिविधः—वेगो भावना स्थितिस्थापकश्चेति। वेगानङ्गीकारे क्रियाविशेषानुपपत्तिः प्रत्यक्षविरोधश्च, भावनानङ्गीकारे च स्मरणानुपपत्तिर्दोषः। स्थितिस्थापकानङ्गीकरणे च दोष. पूर्वोक्त एव।

प्र० ( ६२ ) सामान्यविशेषगुणभेदकं सामान्यत्वं विशेषत्वञ्च कीदृशम् ? ( क० सं० प० १८२६ )

उ० (६२) यद्रूपावच्छिन्नसमानाधिकरणं यत्किञ्चिद्द्रव्यविभाजकोपाधिद्वयं तत्तद्रूपभिन्ना या जातिः तदाश्रयभिन्नत्वमेव गुणगतसामान्यत्वम्। स्थितिस्थापकसंस्कारस्य पृथिवीमात्रवृत्तित्वमते तु जातौ स्थितिस्थापकवृत्तिभिन्नत्वमपि निवेशनीयम्। गुणगतविशेषत्वञ्च तादृशजातिमत्त्वम्। केचित्तु आकाशात्मान्यसमवेतवृत्तिपाकजावृत्तिसांसिद्धिकद्रवत्वावृत्तिगुणवृत्तिजातिमत्त्वे सति भावनान्यत्वं सामान्यगुणत्वम्, विशेषगुणत्वञ्च मनोवृत्त्यन्योन्याभावप्रतियोगितावच्छेदकतावच्छेदकगुरुत्वद्रवत्वावृत्तिगुणविभाजकजातिसांसिद्धिकद्रवत्वत्वभावनात्वान्यतमवत्त्वमित्याहुः।

प्र० ( ६३ ) जातेः किं लक्षणम् ? कति च जातयः ? ( क० सं० प० १८२३ )

उ० (६३) स्वाभिमतार्थव्याघातकस्वोत्तरवाक्यत्वं जातेर्लक्षणम्। ताश्च साधर्म्यसमादयश्चतुर्विंशति.।

प्र० (६४) 'सर्वेषां पदार्थानामत्रैवान्तर्भावात् [ नां यथायथमुक्तेष्वन्तर्भावात् ?] सप्तैव पदार्था इति सिद्धम्' इत्यत्र सर्वेषां पदार्थानामित्यनेन येषां ग्रहणं ग्रन्थकृदभिमतं तेषां नामानि लक्षणानि चोक्त्वा अन्तर्भावरीतिश्च यथायथं प्रदर्श्यन्ताम्। (क० सं० प० १८२१)

उ० (६४) 'सर्वेषा'मित्यनेन गौतमप्रोक्तप्रमाणादिषोडशपदार्थानां ग्रहणं ग्रन्थकृदभिमतम्। तेषां नामानि लक्षणानि च ९५–९६ पृष्ठयोर्द्रष्टव्यानि। प्रत्यक्षप्रमाणस्य द्रव्ये, अनुमानादीनां गुणे, प्रमेयेषु आत्मशरीरेन्द्रियाणां द्रव्ये, अर्थस्य गन्धरसरूपस्पर्शशब्दरूपस्य गुणे, बुद्धेर्गुणे, मनसो द्रव्ये, प्रवृत्तेर्गुणे, दोषाणाम्

इच्छाद्वेषमिथ्याज्ञानस्वरूपाणां रागद्वेषमोहप्रतिपाद्यानां गुणे, मरणानन्तरभावि जननं प्रेत्यभावः, तथा च चरमप्राणशरीरसंयोगध्वंसरूपमरणस्य अभावे, आद्य-शरीरप्राणसंयोगरूपजननस्य गुणे, सुखदुःखसंवेदनस्वरूपस्य फलस्य गुणे, दुःखस्य गुणे, आत्यन्तिकदुःखनिवृत्तिरूपस्यापवर्गस्य अभावे, ज्ञानात्मकसंशयस्य गुणे, सुखरूपस्य प्रयोजनस्य गुणे, दुःखाभावरूपस्य तस्य अभावे, इच्छाविषयरूपप्रयो-जनस्य च यथायथं द्रव्यादिषु, दृष्टान्तस्य सिद्धान्तस्य च द्रव्यादिषु, शब्दस्वरूप-प्रतिज्ञाद्यन्यतमात्मकावयवानां गुणे, व्याप्यारोपेण व्यापकारोपस्य तर्कस्य गुणे, प्रमाणफलरूपनिर्णयस्य गुणे, तत्त्वबुभुत्सुकथारूपवादस्य गुणे, विजिगीषुकथारूपस्य जल्पस्य गुणे, स्वपक्षस्थापनाहीनाया परपक्षविदलनमात्रावसानाया विजगीषुकथारू-पाया वितण्डाया गुणे, अनुमिति तत्कारणान्यतरप्रतिबन्धकज्ञानविषयरूपाणां हेत्वा-भासानां यथायथं द्रव्यादिषु, दूषणाभिधानविशेषरूपस्य छलस्य गुणे, असदु-त्तररूपजातेर्गुणे, वादिपराजयसम्पादकरूपनिग्रहस्थानानां यथायथं द्रव्यादिषु अन्तर्भावो बोध्यः।

अनन्यचित्तैरनिशं गुरूणामुपदेशतः।
माला प्रजपनीयेयं परीक्षासिद्धिकामिभिः॥

अत्रत्यसङ्केतविवरणम्

का० ग० स० का०—काशी-गवर्नमेण्ट-संस्कृत-कालेज।
का० हि० वि० वि०—काशी हिन्दू-विश्वविद्यालयः।
क० सं० ए०—कलकत्ता-संस्कृत-एसोसिएशन।

# वर्णानुक्रमिकसूची

( Index )

## 'ध्रुवपदा' समुद्धृतग्रन्थनामानि

## 'ध्रुवपदा' समुद्धृतग्रन्थकारनामानि

# विदुषामभिमतानि

हिन्दूविश्वविद्यालयीय-प्रो-भाईस्-च्यान्सेलार-पदमलङ्कुर्वतां श्रीमताम्
आनन्दशङ्करध्रुव एम० ए०, एल-एल० बी० आई० ई० एस०
महोदयानामभिमतम्—

BENARES HINDU UNIVERSITY,
BENARES.
11-1-30.

Pandit Hariharji has read to me some portions of his commentary on "Tarka-Saṃgraha" I have much pleasure in recommending his work to all students of Sanskrit Nyāya. A special feature which I have observed in the work is the up-to-date manner in which the subject has been treated, for example, Pandit Hariharji has noted the views of Buddhist and Jaina logicians as disclosed in recent publications of these important schools of Indian logic.

The style of his work is really charming.

Sd / A. B. Dhruva,
Pro-Vice-Chancellor.

---

काशीस्थ-राजकीय-प्रधान-संस्कृतपाठशालाध्यक्षाणां
श्रीमद्गोपीनाथकविराज एम० ए०
महोदयानामभिमतम्—

GOVERNMENT SANSKRIT COLLEGE,
BENARES.
14-5-1930

I have great pleasure in going through the pages of Pandit Harihar Sāstrī's edition of 'Tarka Saṅgraha' and 'Tarka Dipikā' by Annam Bhaṭṭa, with Govardhana Misra's 'Nyāyabodhinī' and the editor's own commentary, called

'Dhruvapada'. As an elementary work on Tarka Sāstra, the popularity of Annaṁ Bhaṭṭa's booklet is probably second to none in this part of the country, and a good edition of this work, prepared on modern critical lines and furnished with a historical introduction and an exhaustive *index verborum*, has long been felt to be a desideratum among the Sanskrit students Pandit Harihar Sāstrī must be congratulated on having succeeded in supplying this need. The value of the edition has been greatly enhanced by the addition of the new commentary, which consists of occasional notes, most interesting and illuminating, on important points relating to the text. These editorial notes, culled from a wide range of literature and written in a simple and lucid style, are likely to prove useful, not only to the junior students for whom they are meant but even to more advanced scholars.

Sd / Gopinath Kaviraj, M. A.
Principal.

---

कलकत्तानगरीस्थ-राजकीयसंस्कृतपाठशालीय भूतपूर्वप्रधानाध्यापकानां
हिन्दूविश्वविद्यालय-प्राच्यविद्याविभागाध्यक्षाणां
महामहोपाध्यायश्रीमत्प्रमथनाथतर्कभूषण-
महोदयानामभिमतम्—

पण्डितप्रवरेण श्रीमता हरिहरशास्त्रिणा विरचितां ध्रुवपदां नाम तर्कसंग्रहस्य विवृतिं सम्यगालोच्य परां प्रीतिमवाप्तवानस्मि । यद्यपि तर्कसंग्रहस्य व्याख्याग्रन्थाः पण्डितकुलधुरीणैर्विरचिता बहवः समुपलभ्यन्ते येषां समुपादेयता सर्व्वैरेव सारग्राहिभिर्विद्वद्वर्य्यैः सप्रशंसावादमङ्गीक्रियते, तथापि एतस्या विवृतेः साम्प्रतं विशेषेणावश्यकता प्रेक्षावद्भिः सहृदयैः सर्व्वैरेवाङ्गीकर्त्तव्येत्यस्मिन् विषये नास्ति ममाणुरपि सन्देहावसरः। सर्व्वथा अस्या विवृते प्राचीनमतपरिचायिका शैली यथास्थानमपेक्षितयुक्तयवतारणप्रणाली च सहृदयानां शास्त्ररहस्यबुभुत्सूनां नितरां मुदं विधास्यतीति अस्ति मे सुदृढो विश्वास इति शम् ।

श्रीप्रमथनाथतर्कभूषणशर्म्मणः

---

काशिकराजकीयसंस्कृतपाठशालीयप्रधानन्यायशास्त्राध्यापकानां महामहोपाध्याय-
श्रीमद्वामाचरणन्यायाचार्य्यमहोदयानां मतम्—

सुप्रसिद्धस्यान्नंभट्टप्रणीतस्य तर्कसंग्रहस्य ध्रुवपदाभिधाना व्याख्येयं श्रीमता हरिहरशास्त्रिणा समुपनिबद्धा। अस्यां च व्याख्यायां न केवलं न्यायवैशेषिकाद्यास्तिकदर्शनाभ्युपगतपदार्थानां जैनबौद्धादिनास्तिकदर्शनाभ्युपेतपदार्थानामपि बहवो विचाराः सन्निबद्धा व्याख्याकृता। आधुनिकमतवादोऽपि समीचीनरीत्या विचारितोऽनेन।

एतद्ग्रन्थपर्य्यालोचनेनैवैतत् सुस्पष्टं समवगमिष्यन्ति सुधिय इति बहुजल्पनाद्विरम्यते। न्यायशास्त्रमधिजिगांसूनां छात्राणामेतद्ग्रन्थाध्ययनेन भाष्य-वार्तिकतात्पर्य्यटीका-न्यायकन्दली—किरणावलीप्रभृतिदुरूहग्रन्थाध्ययनपरिश्रममन्तरेणापि तत्तत्पदार्थावबोधो भविष्यतीत्यलमनल्पजल्पनेन।

महामहोपाध्यायः
श्रीवामाचरणन्यायाचार्य्यः

---

हिन्दूविश्वविद्यालयीयप्रधानन्यायशास्त्राध्यापकानां श्रीमतां
श्रीशङ्करतर्करत्नमहोदयानां मतम्—

अथ तर्कसंग्रहस्य श्रीहरिहरशास्त्रिणा प्रणीतेयम्।
दृष्टा विवृतिरतीव प्रमुदितमनसा मयाऽभिनवा॥
गौतमकाणादमतस्वीकृतविषयानवश्यबोद्धव्यान्।
सुनिपुणरीतिविशेषैर्विवृतिकृदत्र प्रकाशयति॥
बहुतरनिबन्धचर्चाफलमिव लभ्यं हि वैदुष्यम्।
एतद्विवृतिविलोकैः सुखेन विन्देत् सुधीवृन्दम्॥
अणुरपि मम सन्देहो न विद्यतेऽस्मिन् यदेष सन्दर्भः।
पाठ्यग्रन्थेष्वचिरं स्थानं रुचिरं लभेतेति॥ ४॥

श्रीश्रीशङ्करशर्म्मतर्करत्नस्य

---

मुजःफरपुरस्थराजकीयसंस्कृतविद्यालयीयभूतपूर्वन्यायाध्यापकानां
हिन्दूविश्वविद्यालयप्रधानवेदान्तशास्त्राध्यापकानां
श्रीमद्बालकृष्णमिश्रमहोदयानां मतम्—

कवितार्किकप्रवरश्रीहरिहरशास्त्रिप्रणीतां टिप्पणीं तर्कसंग्रहस्यावलोक्य परमानन्दमनुविन्दामि। अत्र नवीनन्यायनिबन्धेषु प्रायेणावर्त्तमाना एव विषयाः पुरातननिबन्धेभ्यः सङ्कलय्य श्रमातिशयेन शृङ्खलिता सुमनसां मालिका इव

समन्ततः समुल्लसन्ति । बहुलेषु च स्थलेषु सौगतार्हतादीनामभिमतान्यपि विद्यन्तेऽपोद्यतया प्रतिपादितानि। लेखनक्रमोऽपि प्रौढिमानं भजमानो हृदयं द्योतयन्नुपनयति शोभां सन्दर्भस्य । एतदवगमेन च व्युत्पत्तिवैशद्यं सद्यः समुत्पत्तुमीष्टे नात्र लेशतोऽपि संशयस्यावकाश इति ।

बालकृष्णमिश्रः

---

"वाराणस्याम्,

आश्विन बदि १ सं० १९८७

श्रीश्रीगौरकृष्णः शरणम्

कलियुगजनपावनावतारजीवजीवातुपरमपुमर्थप्रेमवितरणपरायणभगवच्छ्री-
श्रीकृष्णचैतन्यचरणोपदिष्टैकवीथीपथिकश्रीमन्माध्वसम्प्रदायाचार्य-
दार्शनिकसार्वभौमसाहित्यदर्शनाद्याचार्य्यतर्करत्नन्यायरत्न-
गोस्वामिश्रीदामोदरशास्त्री—

पूजनीयतमाभिनवाक्षपादावतारमहामहोपाध्यायन्यायरत्नश्रीराखालदासशर्मभट्टाचार्यमहाशयान्तेवासिनाऽस्मत्सतीर्थ्येन पण्डितश्रीहरिहरशास्त्रिणा रचितां ध्रुवपदाऽऽख्यां तर्कसंग्रहटीकाम् प्रायशो निरीक्ष्यावधार्य चातो न्यायवैशेषिकतन्त्रयोः प्रविविक्षूणामनायासेन च तदीयमतप्रमेयपरिपाटीं जिज्ञासमानानां सामान्यतोऽवगततत्त्वानामप्यवान्तरविशेषमजिगमिषूणाञ्च ज्ञानपटिमालङ्कर्मीणताम् प्रथमपरीक्षायोग्यानां समुपचिकीर्षया मूलानुवादग्रन्थसंग्रहयोजनया च प्रसाद्यमानमानसः सम्मानयँश्च ध्रुवपदाकर्त्तुः सर्वपथीनं व्युत्पादनपरिप्रढिमानम्, आशयानश्च जगदीश्वराद् ग्रन्थतत्कर्त्रोरनुदिनमुज्जिहानमभ्युदयम्, विरमति मुधा विस्तरादिति शम् ।"

---

कलकत्ता—राजकीयसंस्कृतपाठशालीयप्रधानन्यायशास्त्राध्यापकानां
महामहोपाध्यायश्रीमत्फणिभूषणतर्कवागीश-
महोदयानां मतम्—

काशीहिन्दूविश्वविद्यालयाध्यापकेन नानादर्शनसुपण्डितेन कविवरेण श्रीमता हरिहरशास्त्रिमहोदयेन विरचिता तर्कसंग्रहटिप्पणी विशेषेणावलोकिता मया । अत्र कणादगौतममतव्याख्याप्रसङ्गेन महता परिश्रमेण नानादर्शनमतभेदास्तथा प्राचामाचार्याणां मतभेदाश्च न्यायमीमांसादिनानाशास्त्राणां प्राचीननिबन्धेभ्यः सङ्कलय्य सविचारं तथा प्रकटिता, यथेयं विदुषामपि बहुज्ञतालाभाय भविष्यतीत्यत्र नास्ति सन्देहः । मन्येऽयं तर्कसंग्रहो बहुत्र बहुटिप्पण्या समलङ्कृतोऽभिनवकलेवर इव विराजमानः सर्वैर्विद्वद्भिः सर्वत्र सोत्कण्ठं दर्शनीय इति । १५।९।२०.

श्रीफणिभूषणतर्कवागीशः